तत्त्वार्थदीपिका–पूर्वं तावद्–यावत्कथिकं द्विविधं, पादपोपगमनं–भक्तप्रत्याख्यानं चेति प्रोक्तम्, तत्र–प्रथमं पादपोपगमनस्य द्वैविध्यं प्रतिपादयितुमाह–'पाओवगमणे' इत्यादि। पादपोपगमनं तावत् पूर्वोक्तस्वरूपं तपो द्विविधं भवति, तद्यथा–व्याघातिमंच–निर्व्याघातिमं चेति। तत्र–व्याघातः सिंह–व्याघ्र दावानलादि कृतोपद्रवः, तेन–सहितं व्याघातिमम्, तथा च–सिंहादि कृतोपद्रव-सहितं पादपोपगमनं नाम यावत्कथिकं तपो व्याघातिम मुच्यते। एवं–सिंह व्याघ्र दावानलाद्युपद्रवरूप व्याघातरहितं पादपोपगमनं निर्व्याघातिम मुच्यते एतदुभयमपि पादपोपगमनं नियमात् नियमतः–अप्रतिकर्म शरीर चलनादिक्रिया रूप प्रतिकर्मवर्जितं भवति, एव मौषधोपचारादि रहितञ्च भवतीतिभावः॥८॥

तत्त्वार्थनिर्युक्तिः–पूर्वं तावत्–यावत्कथिकं च पादपोगमन–भक्तप्रत्याख्यानं-

---

तत्त्वार्थदीपिका–पहले कहा गया था कि यावत्कथिक तप दो प्रकार का है–पादपोपगमन और भक्तप्रत्याख्यान। अब पादपोपगमन के भी दो भेदों का प्रतिपाद करते हैं–

पूर्वोक्त पादपोपगमन तप के दो भेद हैं–व्याघातिम और निर्व्याघातिम। जिस तप में सिंह, वाघ, दावानल आदि का उपद्रव हो वह व्याघातिम कहलाता है और सिंह, व्याघ्र, दावानल आदि के उपद्रव रूप व्याघात से रहित पादपोपगमन तप निर्व्याघातिम कहलाता है। यह दोनों ही प्रकार का पादपोपगमन तप नियम से अप्रतिकर्म ही होता है अर्थात् न इसमें हलच–चलन किया जाता है, न औषधोपचार आदि किसी प्रकार की शारीरिक सेवा–शुश्रूषा ही की जाती है ॥८॥

तत्त्वार्थनिर्युक्ति–यावत्कथिक अनशन के दो भेद–पादपोपगमन

---

તત્ત્વાર્થદીપિકા–પહેલા કહેવામાં આવ્યું કે યાવત્કથિક તપ બે પ્રકાર ના છે– પાદપોપાગમન અને ભકતપ્રત્યાખ્યાન હવે પાદપોપગમનના બે ભેદોનું પ્રતિપાદન કરીએ છીએ–

પૂર્વોક્ત પાદપોપગમન તપના બે ભેદ છે– વ્યાઘાતિમ અને નિર્વ્યાઘાતિમ જે તપમાં સિંહ, વાઘ, દાવાનલ આદિના ઉપદ્રવ હોય તે વ્યાઘાતિમ કહેવાય છે અને સિંહ, વાઘ, દાવાનલ આદિના ઉપદ્રવરૂપ વ્યાઘાતથી રહિત પાદપોપગમન તપ નિર્વ્યાઘાતિમ કહેવાય છે. આ બંને જ પ્રકારના પાદપોપગમન તપ નિયમથી અપ્રતિકર્મ જ હોય છે અર્થાત્ ન તો એમનામાં હલન ચલન કરવામાં આવે છે અથવા ન તો ઔષધોપચાર આદિ કોઇ પ્રકારની શારીરિક સેવા શુશ્રૂષા કરવામાં આવે છે ॥ ૮ ॥

તત્ત્વાર્થનિર્યુક્તિ–યાવત્કથિક અનશનના બે ભેદ–પાદપોપગમન અને

भेदेन द्विविध मित्युक्तम्, तत्र-सम्प्रति पादपोपगमनस्य द्वैविध्यं प्रतिपादयितुमाह 'पाओवगमणे दुविहे, वाघाइमे निव्वाघाइमेय, नियमा अप्पडिकम्मे' इति पादपोपगमनं नाम-पूर्वोक्त-स्वरूपं यावत्कथिकविशेषतपो द्विविधं भवति, तद्यथा-व्याघातिमं, निर्व्याघातिमं चेति। तत्र-व्याघातेन सिंहव्याघ्रभल्लूक दावानलाद्युपद्रवेण सहितं पादपोपगमनं व्याघातिम मुच्यते। एवं-सिंह व्याघ्र भल्लूक तरक्षुदावानलादिकृतोपद्रवरहितं पादपोपगमनं निर्व्याघातिम मुच्यते। एतदुभयमपि व्याघातिमं-निर्व्याघातिमं च पादपोपगमनं नियमात्-नियमतः अप्रतिकर्म शरीरचलनादिक्रियारूपप्रतिकर्मवर्जितं भवति, एव मौषधोपचार रहितश्च भवति। उक्तञ्चौपपातिकसूत्रे ३० सूत्रे-'से किं तं पाओवगमणे? पाओवगमणे दुविहे पण्णत्ते, तं जहा-बाघाइमेय, निव्वाघाइमेय-नियमा अप्पडिकम्मे, से तं पाओवगमणे' इति। अथ किन्तत् पादपोपगमनम्?

---

और भक्तप्रत्याख्यान कहे गए हैं, अब पादपोपगमन के दो भेदों का प्रतिपादन करते हैं।

पूर्वोक्त पादपोपगमन नामक यावत्कथिक अनशन तप दो प्रकार का है-व्याघातिम और निर्व्याघातिम। व्याघात अर्थात् विघ्न से युक्त हो वह व्याघातिम और जो विघ्नरहित हो वह निर्व्याघातिम कहलाता है। उपद्रव सिंह, व्याघ्र, भालू तरक्ष तथा दावानल आदि द्वारा होते हैं, यह व्याघातिम और निर्व्याघातिम-दोनों प्रकार के पादपोपगमन नियम से अप्रतिकर्म ही होते हैं अर्थात् शारीरिक हलन-चलन आदि क्रिया से रहित ही होते हैं और इनमें औषधो, पचार भी नहीं किया जाता। औपपातिक सूत्र में कहा है-

प्रश्न-पादपोपगमन के कितने भेद हैं?

---

ભકતપ્રત્યાખ્યાન કહેવામાં આવ્યા છે હવે પાદપોપગમનના બે ભેદોનું પ્રતિપાદન કરીએ છીએ-

પૂર્વોક્ત પાદપોપગમન નામક યાવત્કથિક અનશન તપ બે પ્રકારના છે-વ્યાઘાતિમ અને નિર્વ્યાઘાતિમ, વ્યાઘાત અર્થાત્ વિઘ્નથી જે યુકત હોય તે વ્યાઘાતિમ અને જે વિઘ્ન રહિત હોય તે નિર્વ્યાઘાતિમ કહેવાય છે. ઉપદ્રવ સિંહ, વાઘ, રીંછ, તરક્ષ તથા દાવાનલ આદિ દ્વારા થાય છે. આ વ્યાઘાતિમ અને નિર્વ્યાઘાતિમ બંને પ્રકારના પાદપોપગમન નિયમથી અપ્રતિકર્મ જ હોય છે અર્થાત્ શારીરિક હલન ચલન આદિ ક્રિયાથી રહિત જ હોય છે. અને એમા ઔષધોપચાર પણ કરવામાં આવતો નથી. ઔપપાતિક સૂત્રમાં કહ્યું છે?

પ્રશ્ન-પાદપોપગમનના કેટલા ભેદ છે.

पादपोपगमनं द्विविधं प्रज्ञप्तम्, तद्यथा–व्याघातिमं च, निर्व्याघातिमं च, नियमाद् अप्रतिकर्म, तदेतत् पादपोपगमनम् इति ॥८॥

मूलम्–भत्तपच्चक्खाणे दुविहे, वाघाइमे–निव्वाघाइमेय, नियमा सप्पडिक्कम्मे ।९।

छाया–भक्तप्रत्याख्यान द्विविधम् व्याघातिमं–निर्व्याघातिमं च नियमात् सप्रतिकर्म' ।९॥

तत्त्वार्थदीपिका–पूर्वं तावत्–पादपोपगमनं व्याघातिम–निर्व्याघातिमभेदेन द्विविधमपि–प्रतिपादितम्–सम्प्रति द्वितीयं भक्तप्रत्याख्यानं नाम तपः प्रतिपादयितुमाह–'भत्त पच्चक्खाणे' इत्यादि । भक्तप्रत्याख्यानं नाम पूर्वोक्तस्वरूपं तपो द्विविधं–व्याघातिमं–निर्व्याघातिमं–चेति, तत्र व्याघातो विघ्न स्तेन सहितं व्याघातिमं विघ्नयुक्त मुच्यते । निर्व्याघातिमं विघ्नरहितश्च उच्यते, तथा च–विघ्नसहितं भक्तप्रत्याख्यानं व्याघातिमं व्यपदिश्यते विघ्नरहितश्च भक्तप्रत्या-

---

उत्तर–पादपोपगमन दो प्रकार का कहा गया है–व्याघातिम और निर्व्याघातिम । यह दोनों ही प्रकार के पादोपगमन नियम से प्रतिकर्मरहित ही होते हैं ॥८॥

'भत्तपच्चक्खाणे दुविहे' इत्या०

सूत्रार्थ–भक्तप्रत्याख्यान दो प्रकार का है–व्याघातिम और निर्व्याघातिम । यह दोनों नियमतः सप्रतिकर्म होते हैं ॥९॥

तत्त्वार्थदीपिका––इससे पहले व्याघातिम और अव्याघातिम के भेद से दो प्रकार के पादपोपगमन तप का निरूपण किया गया अब भक्तप्रत्याख्यान नामक दूसरे यावत्कथिक तप का निरूपण करते हैं

पूर्वोक्त भक्तप्रत्याख्यान तप दो प्रकार का है–व्याघातिम और

---

ઉત્તર–પાદપોપગમન બે પ્રકારના કહેવામાં આવ્યા છે—વ્યાઘાતિમ અને નિર્વ્યાઘાતિમ આ બંને જ પ્રકારના પાદપોપગમન નિયમથી પ્રતિકર્મરહિત જ હોય છે ॥ ૮ ॥

'भत्तपच्चक्खाणे दुविहे' ઇત્યાદિ ।

સૂત્રાર્થ––ભક્તપ્રત્યાખ્યાન બે પ્રકારના છે–વ્યાઘાતિમ અને નિર્વ્યાઘાતિમ. આ બંને નિયમતઃસપ્રતિકર્મ હોય છે ॥ ૯ ॥

તત્ત્વાર્થદીપિકા––આની અગાઉ વ્યાઘાતિમ અને અવ્યાઘાતિમના ભેદથી બે પ્રકારના પાદપોપગમન તપનું નિરૂપણ કરવામાં આવ્યું, હવે ભક્તપ્રત્યાખ્યાન નામક બીજા યાવત્કથિક તપનું નિરૂપણ કરીએ છીએ

પૂર્વોક્ત ભક્તપ્રત્યાખ્યાન તપના બે પ્રકારના છે–વ્યાઘાતિમ અને નિર્વ્યાઘાતિમ. વ્યાઘાતનો અર્થ છે વિઘ્ન, જે એથી યુક્ત હોય તે વ્યાઘાતિમ અર્થાત્

ख्यानं निर्व्याघातिमं व्यपदिश्यते। किन्तु-एतदुभयमपि व्याघातिमं निर्व्याघातिमं च भक्तप्रत्याख्यानं नियमात्-नियमतः सप्रतिकर्म चलनादिक्रिया रूप प्रतिकर्म सहितं भवति, एवं-बाह्यौषधोपचारवैयावृत्यादि युक्तश्च भवति ।।९।।

तत्त्वार्थनिर्युक्तिः-पूर्वं तावत्-पादपोपगमनं व्याघातिम-निर्व्याघातिम भेदेन द्विविधं प्रतिपादितम्, सम्प्रति-भक्तप्रत्याख्यानमपि द्वैविध्येन प्रतिपादयितुमाह-भत्तपच्चक्खाणे' इत्यादि। भक्तप्रत्याख्यानं नाम पूर्वोक्तस्वरूपं तपो द्विविधं भवति, तद्यथा-व्याघातिमं, निर्व्याघातिमं च। तत्र-व्याघातो विघ्न स्तेन सहितं भक्तप्रत्याख्यानं व्याघातिम मुच्यते, किन्तु-व्याघातरूप विघ्नरहितं भक्तप्रत्याख्यानं तपो निर्व्याघातिम मुच्यते। तथा च-विघ्नयुक्तं भक्तप्रत्याख्यानं व्याघातिमं व्यपदिश्यते, विघ्नरहित भक्तप्रत्याख्यानं

---

निर्व्याघातिम। व्याघात का अर्थ है विघ्न जो उससे युक्त हो वह व्याघातिम अर्थात् विघ्नयुक्त। जिसमें किसी प्रकारका विघ्न न आए वह निर्व्याघातिम कहलाता है वह दोनों ही प्रकार का भक्तप्रत्याख्यान नियम से सप्रतिकर्म ही होता है अर्थात् इसमें चलना-फिरना आदि क्रिया वर्जित नहीं है। इसमें बाह्य औषध का उपचार भी किया जा सकता है और वैयावृत्य भी की-करवाई जा सकती है ।।९।।

तत्त्वार्थनिर्युक्ति—पहले व्याघातिम और निर्व्याघातिम के भेद से पादपोपगमन के दो भेदों का प्रतिपादन किया गया, अब भक्तप्रत्याख्यान के भी दो भेदों का कथन करते हैं-

पूर्वोक्त भक्तप्रत्याख्यान तप भी दो प्रकार का है-व्याघातिम और निर्व्याघातिम। जो भक्तप्रत्याख्यान व्याघात अर्थात् विघ्न से

---

વિઘ્નયુકત જેમાં કોઈ પ્રકારનું વિઘ્ન ન આવે તે નિર્વ્યાઘાતિમ કહેવાય છે. આ બંને જ પ્રકારના ભકતપ્રત્યાખ્યાન નિયમથી સપ્રતિકર્મ જ હોય છે. અર્થાત્ આમાં ચાલવું ફરવું આદિ ક્રિયા વર્જિત નથી. આમાં બાહ્ય ઔષધનો ઉપચાર પણ કરી શકાય છે અને વૈયાવૃત્ય પણ કરી કરાવાઈ શકે છે ।। ૯ ।।

તત્ત્વાર્થનિર્યુક્તિ--પહેલા વ્યાઘાતિમ અને નિર્વ્યાઘાતિમના ભેદથી પાદપોપગમનના બે ભેદોનુ પ્રતિપાદન કરવામાં આવ્યું હવે ભકતપ્રત્યાખ્યાનના પણ બે ભેદોનું કથન કરીએ છીએ

પૂર્વોક્ત ભકતપ્રત્યાખ્યાન તપ પણ બે પ્રકારના છે વ્યાઘાતિમ અને નિર્વ્યાઘાતિમ. જે ભકતપ્રત્યાખ્યાન વ્યાઘાત અર્થાત્ વિઘ્નથી

निर्व्याघातिमं व्यपदिश्यते। उक्तञ्चौपपातिकसूत्रे-३० सूत्रे-'से किं तं भत्त-पच्चक्खाणे? भत्त पच्चक्खाणे दुविहे पण्णत्ते, तं जहा-वाघाइमेय, निव्वाघाइमे य णियमा सप्पडिकम्मे' इति। अथ किं तत्-भक्त प्रत्याख्यानम्? भक्तप्रत्याख्यानं द्विविधं प्रज्ञप्तम्, तद्यथा-व्याघातिमं च, निर्व्याघातिमं च नियमतः सप्रतिकर्म इति ॥९॥

मूलम्-ओमोयरिया तवे दुविहे, दव्वोमोयरिया-भावोमोयरियाय ॥१०॥

छाया—'अवमोदरिकातपो द्विविधम्, द्रव्यावमोदरिका-भावावमोदरिका च ॥१०॥

तत्त्वार्थदीपिका——'पूर्वं तावत्-प्रथमोपात्तस्या-ऽनशनस्येत्वरिक-याव-

---

युक्त हो वह व्याघातिम और जिसमें किसी प्रकार का विघ्न न हो वह निर्व्याघातिम कहलाता है।

औपपातिकसूत्र के ३०वें सूत्र में कहा है-

'भक्तप्रत्यख्यान के कितने भेद हैं?

'भक्तप्रत्याख्यान के दो भेद हैं, यथा-व्याघातिम और निर्व्याघातिम। यह दोनों प्रकार का भक्तप्रत्याख्यान नियम से प्रतिकर्मयुक्त ही होता है ॥९॥

'ओमोयरिया तवे दुविहे' इत्यादि

सूत्रार्थ-अवमोदरिका नामक तप दो प्रकार का है-द्रव्य-अवमोदरिका एवं भाव-अवमोदरिका ॥१०॥

तत्त्वार्थदीपिका—इत्वरिक और यावत्कथिक-दोनों प्रकार के अन

---

युक्त होय ते व्याघातिम अने जेमां कोई प्रकारनुं विघ्न न होय ते निर्व्याघातिम कहेवाय छे.

ઔપપાતિક સૂત્રના ૩૦ માં સૂત્રમાં કહ્યું છે

ભકતપ્રત્યાખ્યાનના કેટલા ભેદ છે ?

ભકતપ્રત્યાખ્યાનના બે ભેદ છે યથા વ્યાઘાતિમ અને નિર્વ્યાઘાતિમ આ બંને પ્રકારના ભકતપ્રત્યાખ્યાન નિયમથી પ્રતિકર્મ યુકત જ હોય છે. ॥ ૯ ॥

સૂત્રાર્થ—અવમોદારિક નામનું તપ બે પ્રકારનું છે દ્રવ્ય, અવમોદારિકા અને ભાવ અવમોદરિકા ॥ ૧૦ ॥

તત્ત્વાર્થદીપિકા-ઈત્વરિક અને યાવત્કથિક બંને પ્રકારના અનશન તપનું

त्कथिकभेदेन द्विविधस्य प्ररूपणं कृतम्, सम्प्रति-द्वितीयस्यावमोदरिका नामक बाह्यतपसः स्वरूपं प्ररूपयितुमाह-'ओमोयरिया तवे दुविहे' इत्यादि। अवमोदरिका तपः-अवमम्-ऊनम् उदरं यस्मिन् भोजने तदवमोदरं तदस्त्यस्यां क्रियायाम् इति-अवमोरिका तपो विशेषरूपा क्रिया तद्रूपम्-अवमोदरिका नाम तपो द्विविधं भवति। द्रव्यावमोदरिकारूपं भावावमोदरिकारूपञ्च, तत्र-आहारोपध्यादि बाह्यवस्तुनोऽल्पीकरणं द्रव्यावमोदरिका, क्रोधादिकषाय रूपान्तरिकवस्तुनोऽल्पीकरणं भावावमोदरिकेति ॥१०॥

तत्त्वार्थनिर्युक्तिः—पूर्वं तावद्-प्रथमोपात्तस्या-ऽनशनस्य बाह्य तपस इत्वरिक-यावत्कथिकभेदेन द्विविधस्य सविस्तरं प्ररूपणं कृतम्, सम्प्रति- क्रमागतस्य द्वितीयबाह्यतपसो-ऽवमोदरिका रूपस्य स्वरूपं निरूपयितुमाह-'ओमोय-

---

शन तप का निरूपण किया जा चुका अब दूसरे बाह्य तप अवमोदरिका (अनोदर) स्वरूप का प्रतिपादन करते हैं-

अवम अर्थात् ऊन (कम) उदर जिस भोजन में हो उसे अवमोदर कहते हैं। जिस क्रिया में अवमोदर हो वह अवमोदरिका। यह एक प्रकार की तपश्चर्या है। इसके दो भेद हैं-द्रव्य-अवमोदरिका और भाव-अवमोदरिका। आहार, उपधि आदि बाह्य वस्तुओं में कमी करना द्रव्य-अवमोदरिका है और क्रोधादि कषायों में कमी करना भाव-अवमोदरिका है ॥१०॥

तत्त्वार्थनिर्युक्ति-इससे पूर्व प्रथम बाह्यतप अनशन के यावत्कथिक और इत्वरिक भेदों का विस्तारपूर्वक निरूपण किया गया, अब क्रमप्राप्त द्वितीय बाह्य तप अवमोदरिका के स्वरूप का प्रतिपादन करते हैं-

---

નિરૂપણ કરવામાં આવી ગયું, હવે બીજા બાહ્ય તપ અવમોદરિકા (ઉનોદર) ના સ્વરૂપનું પ્રતિપાદન કરીએ છીએ.

અવમ અર્થાત્ ઉન (ઓછું) ઉદર જે ભોજનમાં હોય તેને અવમોદર કહે છે. જે ક્રિયામાં અવમોદર હોય તે અવમોદરિકા આ એક પ્રકારની તપશ્ચર્યા છે. આના બે ભેદ છે દ્રવ્ય અવમોદરિકા અને ભાવ અવમોદરિકા આહાર' ઉપધિ આદિ બાહ્ય વસ્તુઓમાં ઘટાડો કરવો દ્રવ્ય અવમોદરિકા છે અને ક્રોધાદિ કષાયોમાં ઘટાડો કરવો ભાવ અમોદરિકા છે ॥ ૧૦ ॥

તત્ત્વાર્થનિર્યુકિત-આની પહેલાં પ્રથમ બાહ્યતપ અનશનના યાવત્કથિક અને ઇત્વરિક ભેદોનું વિસ્તારપૂર્વક નિરૂપણ કરવામાં આવ્યું છે, હવે ક્રમપ્રાપ્ત દ્વિતીય બાહ્યતપ અવમોદરિકાના સ્વરૂપનું પ્રતિપાદન કરીએ છીએ

रिया तवे दुविहे, दव्वोमोरिया-भावोमोयरिया य' इति। अवमोदरिका तपः-अवमम् उनम् उदरं यस्मिन् भोजने तद्-अवमोदरंभोजनम्, तदस्त्यस्यां क्रियायामिति अवमोदरिका तपो विशेषरूपा क्रिया उच्यते तद्रूपं तपोऽवमोदरिका तप उच्यते तत्खलु-अवमोदरिका तपो द्विविधं भवति-द्रव्यावमोदरिकारूपं-भावावमोदरिकारूपश्चेति, । तत्र-बाह्य वस्तुनोल्पीकरणं द्रव्यावमोदरिका, आन्तरिक वस्तुनोऽल्पीकरणं भावावमोरिका व्यपदिश्यते । उक्तञ्चौपपातिके ३० सूत्रे-'से किं तं ओमोयरिया ? ओमोयरिया दुविहा पण्णत्ता तं जहा-दव्वोमोयरिया-भावोमोयरिया य' इति, अथ का सा-अवमोदरिका-? अवमोदरिका द्विविधा प्रज्ञप्ता तद्यथा-द्रव्यावमोदरिका च-भावावमोदरिका च १०॥

**मूलम्-दव्वोमोयरिया तवे दुविहे, उवगरणदव्वोमोयरिया, भत्तपाणदव्वोमोयरिया य ॥११॥**

छाया-द्रव्यावमोदरिका तपो द्विविधम्, उपकरणद्रव्यावमोदरिका भक्तपानद्रव्यावमोदरिका च' ॥११॥

---

जिस भोजन में उदर उन (कम) हो वह भोजन अवमोदर कहलाता है, वह जिस क्रिया में हो वह अवमोदरिका । अवमोदरिका एक प्रकार की तपश्चर्या है । इसके दो भेद हैं-द्रव्य-अवमोदरिका और भाव अवमोदरिका बाह्य वस्तुओं की अल्पता करना द्रव्य-अवमोदरिका हैं और कषायादि विकारभाव को अल्प करना भाव-अवमोदरिका है । औपपातिकसूत्र के तीसवें सूत्र में कहा है-

प्रश्न-अवमोदरिका के कितने भेद हैं ।

उत्तर-अवमोदरिका दो प्रकार की है-द्रव्य-अवमोदरिका और भाव-अवमोदरिका ॥१०॥

'दव्वोमोयरिया तवे दुविहे' इत्यादि ॥११॥

---

જે ભોજનમાં ઉદર ઉનં (ઓછું) હોય તે ભોજન અવમોદર કહેવાય છે તે જે ક્રિયામાં હોય તે અવમોદરિકા. અવમોદરિકા એક પ્રકારની તપશ્ચર્યા છે એના બે ભેદ છે દ્રવ્ય અવમોદરિકા અને ભાવ અવમોદરિકા. બાહ્ય વસ્તુઓનુ ઓછાપણું કરવું દ્રવ્ય અવમોદરિકા છે જ્યારે કષાયાદિ વિકારભાવને ઓછો કરવો એ ભાવ અવમોદારિકા છે. ઔપપાતિક સૂત્રના ત્રીસમા સૂત્રમાં કહેલ છે

પ્રશ્ન—અવમોદરિકાના કેટલા ભેદ છે ?

ઉત્તર-અવમોદરિકા બે પ્રકારની છે દ્રવ્ય અવમોદરિકા અને ભાવ અવમોદરિકા ॥ ૧૦ ॥

'દવ્વોમોયરિયા તવે દુવિહે' ઈત્યાદિ'

तत्त्वार्थदीपिका-पूर्वं तावद् अवमोदरिका रूपं तपो द्रव्यभावभेदरूपपरद्वै-विध्येन प्ररूपितम्, सम्प्रति-द्रव्यावमोदरिका तपसो द्वैविध्यं प्ररूपयितुमाह-'दव्वोमोयरिया तवे' इत्यादि। द्रव्यावमोदरिका तपो द्विविधम् भवति। तद्यथा उपकरणद्रव्यावमोदरिका भक्तपानद्रव्यावमोदरिका च, तत्राऽल्पवस्त्रपात्र सदोरक मुखवस्त्रिकाद्युपकारणरूप द्रव्य विषयकाऽवमोदरिकारूप तपो विशेषक्रिया 'उपकरण द्रव्यावमोदिका' उच्यते। अल्पभक्तपानादि द्रव्यविषयकावमोद-रिकारूपतपश्चरणविशेषक्रिया 'भक्तपानद्रव्यावमोदरिका' व्यपदिश्यते ॥११॥

तत्त्वार्थ निर्युक्तिः-पूर्वं खलु-बाह्यं तपोऽवमोदरिकारूपं द्रव्य-भाव भेदमा-श्रित्य द्विविधतया प्रतिपादितम्, सम्प्रति-तत्र प्रथमोपात्तं द्रव्यावमोदरिका तपः

---

सूत्रार्थ—द्रव्य-अवमोदरिका तप दो प्रकार का है-उपकरणद्रव्य-अवमोदरिका और भक्तपान-द्रव्य-अवमोदरिका ॥११॥

तत्त्वार्थदीपिका-पहले अवमोदरिका तप के द्रव्य और भाव की अपेक्षा से दो भेद कहे गए, अब द्रव्य-अवमोदरिका तप के दो भेद की प्ररूपणा करते हैं—द्रव्य अवमोदरिका तप दो प्रकार का है-उप-करण द्रव्य-अवमोदरिकाऔर भक्तपान द्रव्यावमोदरिका। वस्त्र, पात्र, डोरा सहित मुखवस्त्रिका आदि उपकरणों का अल्पता को उपकरण द्रव्य-अवमोदरिका कहते हैं और भोजन-पान की अल्पता को भक्तपान-द्रव्यअवमोदरिका कहते हैं ॥११॥

तत्वार्थनिर्युक्ति--पहले अवमोदरिका बाह्य तप के द्रव्य और भाव की अपेक्षा से दो भेद बतलाए गए, अब द्रव्य-अवमोदरिका तप की प्ररूपणा करते हैं-

---

સૂત્રાર્થ—દ્રવ્ય અવમોદરિકા તપ બે પ્રકારનું છે—ઉપકરણદ્રવ્ય અવમો-દરિકા અને ભક્તપાન દ્રવ્ય અવમોદરિકા ॥ ૧૧ ॥

તત્ત્વાર્થદીપિકા-પહેલા અવમોદરિકા તપના દ્રવ્ય અને ભાવની અપેક્ષાથી બે ભેદ કહેવામાં આવ્યા. હવે દ્રવ્ય અવમોદરિકા તપના બે ભેદોની પ્રરૂપણા કરીએ છીએ—

દ્રવ્ય અવમોદરિકા તપ બે પ્રકારના છે—ઉપકરણદ્રવ્ય અવમોદરિકા અને ભક્તપાનદ્રવ્યાવમોદરિકા વસ્ત્ર, પાત્ર દોરા સહિત મુહપત્તિ આદિ ઉપકરણોની અલ્પતાને ઉપકરણ દ્રવ્ય અવમોદરિકા કહે છે અને ભોજન પાનની અલ્પ-તાને ભક્તપાન દ્રવ્ય અવમોદરિકા કહે છે ॥ ૧૧ ॥

તત્ત્વાર્થનિર્યુક્તિ—પહેલાં અવમોદરિકા બાહ્ય તપના દ્રવ્ય અને ભાવની અપેક્ષાથી બે ભેદ બતાવાયા, હવે દ્રવ્ય અવમોદરિકા તપની પ્રરૂપણા કરીએછીએ

प्ररूपयितुमाह–'दव्वोमोयरिया तवे दुविहे, उवगरणदव्वोमोयरिया–भत्त पाणदव्वोमोयरिया य' इति । द्रव्यावमोदरिका तपः द्विविधं भवति, उपकरणद्रव्यावमोदरिका भक्तपानद्रव्यावमोदरिकाचेति । तत्र–वस्त्रपात्राद्युपकरण-रूप द्रव्यविषयकावमोदरिका तपः–उपकरणद्रव्यावमोदरिका तप' उच्यते भक्तपानादिरूप द्रव्यविषयकावमोदरिका तपो विशेष क्रियारूपं भक्तपान-द्रव्यावमोदरिका तप उच्यते । उक्तञ्चौपपातिके ३० सूत्रे–से किं तं दव्वोमोयरिया २ दव्वोमोयरिया दुविहा पण्णत्ता, तं जहा–उवगरण दव्वोमोयरिया य–भत्तपाणदव्वोमोयरिया य–' इति अथ का सा द्रव्यावमोदरिका–? द्रव्यावमोदरिका द्विविधा प्रज्ञप्ता तद्यथा–उपकरणद्रव्यावमोदरिका च, भक्तपानद्रव्यावमोदरिका च इति ॥११॥

**मूलम्–उवगरणदव्वोमोयरिया तिविहा, एगवत्थ–एगपाए–चियत्तोवगरण साइज्जणया भेदओ ॥१२॥**

छाया–'उपकरण द्रव्यावमोदरिका त्रिविधा, एकवस्त्र–एकपात्र–त्यक्तोपकरण स्वादनता भेदतः ॥१२॥

---

द्रव्य–अवमोदरिका तप के दो भेद हैं–उपकरणद्रव्य–अवमोदरिका और भक्तपानद्रव्य–अवमोदरिका । वस्त्र–पात्र आदि उपकरणों संबंधी ऊनोदरी को उपकरणद्रव्य–अवमोदरिका तप कहते हैं और आहार–पानी संबंधी ऊनोदरी को भक्तपानद्रव्य–अवमोदरिका कहते हैं। औपपातिकसूत्र के ३० वें सूत्र में कहा है—

प्रश्न–द्रव्य–अवमोरिका के कितने भेद हैं ?

उत्तर–द्रव्य–अवमोदरिका के दो भेद हैं–उपकरण द्रव्य–अवमोदरिका और भक्तपानद्रव्य–अवमोदरिका ॥११॥

'उवगरण दव्वोमोयरिया' इत्यादि

---

દ્રવ્ય અવમોદરિકા તપના બે ભેદ છે ઉપકરણ દ્રવ્ય અવમોદરિકા અને ભક્તપાન દ્રવ્યાવમોદરિકા વસ્ત્ર, પાત્ર આદિ ઉપકરણો સંબંધી ઉનોદરીને ઉપકરણ દ્રવ્ય અવમોદરિકા તપ કહે છે અને આહાર પાણી સંબંધી ઉનોદરીને ભક્તપાનદ્રવ્ય અવમોદરિકા કહે છે ઔપપાતિક સૂત્રના ત્રીસમાં સૂત્રમાં કહ્યું છે

પ્રશ્ન––દ્રવ્ય–અવમોદરિકાના કેટલા ભેદ છે. ?

ઉત્તર––દ્રવ્ય અવમોદરિકાના બે ભેદ છે ઉપકરણદ્રવ્ય અવમોદરિકા અને ભક્તપાન દ્રવ્ય અવમોદરિકા ॥ ૧૧ ॥

'उवगरण दव्वोमोयरिया' ઇત્યાદિ

तत्त्वार्थदीपिका-पूर्वं तावद्-द्रव्यावमोदरिका द्विविधत्वेन प्ररूपिता, उपकरणद्रव्यावमोदरिका-भक्तपानद्रव्यावमोदरिका चेति। तत्र-प्रथमोपात्ताया उपकरणद्रव्यावमोदरिकाया स्त्रैविध्यं प्रतिपादयितुमाह-'उवगरण दव्वोमोयरिया' इत्यादि उपकरणद्रव्यावमोदरिका वस्त्रपात्राद्युपकरणरूप द्रव्यविषयकाऽवमोदरिका त्रिविधा भवति, तद्यथा-एकवस्त्र-एकपात्र-त्यक्तोपकरण स्वादनता भेदतः। एकं वस्त्रम् एकं चोलपट्टरूपं वस्त्रम्, न द्वितीयम् १ एकं पात्रम्२ त्यक्तोपकरण स्वादनता ३ च, त्यक्ता उपकरणस्य भाण्डोपकरणादेः स्वादनता आसक्तिर्यस्यामवमोदरिकायां तपो विशेषक्रियायां सा त्यक्तोपकरणस्वादनता भाण्डामत्रोपकरणादिषु मूर्च्छापरित्यागता, इत्येवं रीत्या त्रिविधा खलु उपकरण द्रव्यावमोदरिका भवति ॥१२॥

---

सूत्रार्थ--उपकरणद्रव्य-अवमोदरिका के तीन भेद हैं-एक वस्त्र, एक पात्र और त्यक्तोपकरण स्वादनता ॥१२॥

तत्त्वार्थदीपिका--द्रव्य, अवमोदरिका के दो भेदों का प्ररूपण किया गया-उपकरणद्रव्य-अवमोदरिका और भक्तपान द्रव्य-अवमोदरिका अब इनमें से पहले भेद उपकरण द्रव्य अवमोदरिका के तीन भेदों का प्रतिपादन करते हैं-

उपकरण द्रव्य-अवमोदरिका तीन प्रकार की है-एक वस्त्र एक पात्र त्यक्तोकरण स्वादनता। वस्त्र सिर्फ एक ही-चोलपट्ट और सदोरक मुख वस्त्रिका होना, दूसरा न होना एक वस्त्र-अवमोदरिका है। इसी प्रकार एक ही पात्र रखना एक पात्र अवमोदरिका है। भाण्ड, उपकरण आदि में मूर्छा का परित्याग करना त्यक्तोपकरण स्वादनता-अवमोदरिका कहलाती है ॥१२॥

---

સૂત્રાર્થ--ઉપકરણુદ્રવ્ય અવમોદરિકાના ત્રણ ભેદ છે એક વસ્ત્ર, એક પાત્ર અને ત્યક્તોપકરણુસ્વાદનતા ॥ ૧૨ ॥

તત્ત્વાર્થદીપિકા--દ્રવ્ય અવમોદરિકાના બે ભેદોનું પ્રરૂપણુ કરવામાં આવ્યું ઉપકરણુદ્રવ્ય અવમોદરિકા અને ભક્તપાનદ્રવ્ય અવમોદરિકા હવે આ માંથી પહેલા ભેદ ઉપકરણુ દ્રવ્યઅવમોદરિકાના ત્રણુ ભેદોનું પ્રતિપાદન કરીએ છીએ

ઉપકરણુદ્રવ્ય અવમોદરિકા ત્રણુ પ્રકારની છે એક વસ્ત્ર, એકપાત્ર અને ત્યક્તોપકરણુસ્વાદનતા વસ્ત્ર પાત્ર એક જ ધોળી અને દોરા સહિતની મુખવસ્ત્રિકા બીજુ ન હોવું એક વસ્ત્ર અવમોદરિકા છે એવી જ રીતે એક જ પાત્ર રાખવું એક પાત્ર અવમોદરિકા છે. વાસણ, ઉપકરણુ આદિમાં મોહનો પરિત્યાગ કરવો ત્યક્તોપકરણુસ્વાદનતા અવમોદરિકા કહેવાય છે, ॥ ૧૨ ॥

तत्वार्थनिर्युक्तिः-पूर्वं खलु-द्रव्यावमोदरिकाया द्वैविध्यं प्रोक्तम्, साम्प्रतं -तत्र प्रथमोपात्तोपकरणद्रव्यावमोदरिकाया विध्यं प्रतिपादयितु माह-'उव गरणद्व्वोमोयरिया तिविहा, एगवत्थ एगपाए-चियत्तोवगरण साइ-ज्जणया भेयओ' इति। उपकरणद्रव्यावमोदरिका-वस्त्रस्य पात्रादेरूपकरण-द्रव्यस्य विषयेऽवमोदरिका तपः उपकरणद्रव्यावमोदरिकास्त्पमुच्यते, सा खलू-पकरणद्रव्यावमोदरिका त्रिविधा भवति। तद्यथा-एकं वस्त्रं सदोरकमुखवस्त्रिका सहितम् एकं चोलपट्टरूपं वस्त्रम्, न द्वितीयं भवति। एवम्-एकं पात्रम्, त्यक्तोपक-रणस्वादनता च, त्यक्ता-उपकरणस्य भाण्डामत्रोपकरणादेः स्वादनता मूर्च्छाऽऽ-सक्तिर्यस्यामवमोदरिकायां क्रियायां सा-त्यक्तोपकरणस्वादनता, भाण्डोपकरणा-दिषु मूर्च्छापरित्यागिता, इत्येवं त्रिविधा खलु-उपकरण द्रव्यावमोदरिका तपो विशेषक्रियाऽवगन्तव्या। उक्तञ्चौपपातिके ३० सूत्रे-'से किं तं उवकरण-

तत्वार्थनिर्युक्ति--पहले द्रव्य-अवमोदरिका के दो भेदों का कथन किया गया अब उपकरणद्रव्य-अवमोदरिका के तीन भेदों का कथन करते हैं-

उपकरण द्रव्य-अवमोदरिका तीन प्रकार का है-वस्त्र-पात्र आदि उपकरण द्रव्यों के विषय में ऊनोदरी होना उपकरणद्रव्य-अवमोदरिका कहलाती है। उसके तीन भेद इस प्रकार हैं (१) एक वस्त्र-डोरा सहित मुखवस्त्रिका के साथ एक चोलपट्ट ही रखना, दूसरा कोई वस्त्र न रखना (२) एकपात्र-एक से अधिक पात्र न रखना और (३) त्यक्तो-पकरण स्वादनता भाण्ड, पात्र आदि उपकरणों पर मूर्छा-ममता न होना यह तीन प्रकार की उपकरण द्रव्य-अवमोदरिका समझनी चाहिए। औपपातिकसूत्र के तीसवें सूत्र में कहा है—

તત્ત્વાર્થનિર્યુક્તિ—પહેલાં દ્રવ્ય અવમોદરિકાના બે ભેદોનું કથન કરવામાં આવ્યું હવે ઉપકરણદ્રવ્ય અવમોદરિકાના ત્રણ ભેદોનું કથન કરીએ છીએ

ઉપકરણદ્રવ્ય અવમોદરિકા ત્રણ પ્રકારની છે વસ્ત્ર, પાત્ર આદિ ઉપક-ણદ્રવ્યોના વિષયમાં ઉનોદરી હોવી ઉપકરણદ્રવ્ય અવમોદરિકા કહેવાય છે. તેના ત્રણ ભેદ આ પ્રમાણે છે (૧) એક વસ્ત્ર દોરા સહિત મુખવસ્ત્રિકાની સાથે એક ચોળપટ જ રાખવો બીજું કોઈ પણ વસ્ત્ર ન રાખવું (૨) પાત્ર એકથી અધિક પાત્ર ન રાખવા અને (૩) ત્યક્તોપકરણસ્વાદનતા વાસણ પાત્ર આદિ ઉપકણો પર મૂર્છા મમતા ન હોવી. આ ત્રણ પ્રકારની ઉપકરણદ્રવ્ય અવમોદરિકા સમજવી જોઈએ

ઔપપાતિકસૂત્રના ત્રીસમાં સૂત્રમા કહ્યું છે

द्व्वोमोयरिया ? उवगरणद्व्वोमोयरिया तिविहा पण्णता, तं जहा-एगे वत्थे एगे पाए चियत्तोवगरणसाइज्जणया, से तं उवगरणद्व्वोमोदरिया' इति, अथ का सा-उपकरणद्रव्यावमोदरिका ? उपकरणद्रव्यावमोदरिका त्रिविधा प्रज्ञप्ता, तद्यथा-एकं वस्त्रम्, एकं पात्रम्, त्यक्तोपकरणस्वादनता, सा-एषा, उपकरणद्रव्यावमोदरिका, ॥इति॥१२॥

मूलम्-भत्तपाणद्व्वोमोयरिया तवे अणेगविहे, अट्ठ-कवलप्पमाणमेत्ताइ भेयओ ॥१३॥

छाया—भक्तपानद्रव्यावमोदरिका तपोऽनेकविधम्, अष्टकवल प्रमाण मात्रादि भेदतः' ॥१३॥

तत्वर्थादीपिका— पूर्वं तावत्-उपकरणद्रव्यावमोदरिका त्रैविध्येन प्रतिपादिता, सम्प्रति-भक्तपानद्रव्यावमोदरिकां प्ररूपयितु माह-'भत्तपाणद्व्वो मोदरिया तवे' इत्यादि । भक्तपानद्रव्यावमोदरिका तपोऽनेकविधं भवति, तत्र

---

प्रश्न-उपकरणद्रव्य-अवमोदरिका किसे कहते हैं ?

उत्तर-उपकरणद्रव्य-अवमोदरिका तीन प्रकार की कही है-एकवस्त्र, एकपात्र और त्यक्तोपकरण स्वादनता ॥१२॥

'भत्तपाण द्व्वोमोयरिया' इत्यादि

सूत्रार्थ—आठ कवल मात्र ही आहार करने आदि के भेद से भक्तपान द्रव्य-अवमोदरिका तप अनेक प्रकार का है ॥१३॥

तत्त्वार्थदीपिका—पहले उपकरणद्रव्य-अवमोदरिका के तीन भेद कहे गए हैं, अब भक्तपानद्रव्य-अवमोदरिका का निरूपण करते हैं-

भक्तपानद्रव्य-अवमोदरिका तप अनेक प्रकार का है। अशन, पान, खादिम और स्वादिम, यह चार प्रकार का आहार भक्त-पान

---

પ્રશ્ન-ઉપકરણદ્રવ્ય અવમોદરિકા કોને કહે છે ?

ઉત્તર-ઉપકરણદ્રવ્ય અવમોદરિકા ત્રણ પ્રકારની કહેલી છે એક વસ્ત્ર, એકપાત્ર અને ત્યક્તોપકરણસ્વાદનતા ॥ ૧૨ ॥

'भत्तपाण द्व्वोमोयरिया' ઇત્યાદિ

સૂત્રાર્થ—આઠ કવલ માત્ર જ આહાર કરવા આદિના ભેદથી ભક્તપાન દ્રવ્ય અવમોદરિકા તપ અનેક પ્રકારના છે. ॥ ૧૩ ॥

તત્ત્વાર્થદીપિકા—પહેલાં ઉપકરણદ્રવ્ય અવમોદરિકાના ત્રણ ભેદ કહેવામાં આવી ગયા છે હવે ભક્તપાનદ્રવ્ય અવમોદકરિકાનું નિરૂપણ કરીએ છીએ

ભક્તપાનદ્રવ્ય અવમોદરિકા તપ અનેક પ્રકારના છે. અશન, પાન, ખાદ્ય અને સ્વાદ્ય, આ ચાર પ્રકારના આહાર ભક્તપાનદ્રવ્ય કહેવાય છે. આનાથી

—भक्तपानद्रव्यम् अशनपानखादिम—स्वादिमरूपचतुर्विधाहारद्रव्यमुच्यते, तत्सम्बन्धि—अवमोदरिका तपः—अवमोदरिका नाम तपश्चरणक्रियाविशेषः तद्रूपं तपः भक्तपानद्रव्यावमोदरिका तप उच्यते, तच्चाऽनेकविधं भवति, 'अष्टकवलप्रमाणमात्रादि भेदात्। तत्रापि—प्राधान्येन त्रिविधम्—उत्कृष्ट, मध्यम, जघन्यभेदात्। तत्रो—त्कृष्टम् एककवलादारभ्याऽष्टकवलाहारपर्यन्ताहाररूपम् १ मध्यमम्—नवमकवलादारभ्य षोडशकवलाहारपर्यन्ताहाररूपम् २ जघन्यम्—सप्तदशकवलादारभ्यैकत्रिंशत्कवलपर्यन्ताहाररूपम् ३ तत्रापि—एकादि कवलहानेस्तारतम्येनाऽस्याऽनेकविधत्व मपि भवति ॥इति॥१३॥

तत्त्वार्थनिर्युक्तिः—'पूर्वं तावद्—द्विविधं तपः, तत्रापि—उपकरणद्रव्यावमोदरिकातपस्त्रिविधं प्रतिपादितम् सम्प्रति—भक्तपानद्रव्यावमोदरिकातपः प्ररूपयितु माह—'भत्त पाणदव्वोमोयरिया तवे अणेगविहे अट्ठकवलप्पमाणमेत्ताइ भेयओ' इति। भक्तपानद्रव्यावमोदरिका तपः—अशनपानरूपा·

---

द्रव्य कहलाता है। इससे संबंध रखने वाली ऊनोदरी को भक्तपान द्रव्य अवमोदरिका तप कहते हैं। वह यद्यपि अनेक प्रकार की है, मगर स्थूल भेदों की अपेक्षा से तीन प्रकार की है—उत्कृष्ट, मध्यम और जघन्य। एक कवल से लेकर आठ कवल तक खाना उत्कृष्ट, नौ कवल से लगा कर सोलह कवल तक खाना मध्यम और सतरह कवल से लगाकर इकतीस कवल तक खाना जघन्य भक्तपानद्रव्य–अवमोदरिका है। इसमें एक–दो कवलों की न्यूनाधिकता के कारण अनेक अवान्तर भेद निष्पन्न होते हैं, अतः अनेक प्रकार की है ॥१३।

तत्त्वार्थनिर्युक्ति—उपकरणद्रव्य–अवमोदरिका तप के तीन भेदों का निरूपण किया गया अब भक्तपानद्रव्य–अवमोदरिका तप की प्ररूपणा की जाती है—

---

સંબંધ રાખનારી ઉનોદરીને ભક્તપાનદ્રવ્ય અવમોદરિકા તપ કહે છે. તે જો કે અનેક પ્રકારની છે પણ સ્થૂળભેદોની અપેક્ષાથી ત્રણ પ્રકારની છે. ઉત્કૃષ્ટ, મધ્યમ અને જઘન્ય. એક કોળીયાથી લઈને આઠ કોળીયા સુધી ખાવું ઉત્કૃષ્ટ, નવ કોળીયાથી શરૂ કરીને સોળ કોળીયા સુધી ખાવું મધ્યમ અને સત્તર કોળીયાથી લઈને એકત્રીસ કોળીયા સુધી ખાવું જઘન્ય ભક્તપાનદ્રવ્ય અવમોદરિકા છે. આમાં એક બે કોળીયાની ન્યૂનાધિકતાને કારણે અનેક અવાન્તર ભેદ નિષ્પન્ન થાય છે આથી અનેક પ્રકારની છે ॥ ૧૩ ॥

તત્ત્વાર્થનિર્યુક્તિ—ઉપકરણદ્રવ્ય અવમોદરિકા તપના ત્રણ ભેદોનું નિરૂપણ કરવામાં આવ્યું હવે ભક્તપાનદ્રવ્ય અવમોદરિકા તપની પ્રરૂપણા કરવામાં આવે છે

हारद्रव्यसम्बन्धितपः भक्तपानद्रव्यावमोदरिका तप उच्यते । तच्चाऽनेकविधं भवति, अष्टकवलप्रमाणमात्रादि भेदतः, कवलपरिमाणं चाऽत्रकुक्कुटाण्डप्रमित्तं बोध्यम् । प्राधान्यतोऽवमोदरिकातपः-उत्कृष्ट, मध्यम, जघन्यावमोदरिकाभेदात् त्रिविधं भवति तत्पूर्वं प्रदर्श्यते-द्वात्रिंशत्परिमितैः कवलैः पर्याप्तः पुरुषाहारो भवति । तत्रैककवलादारभ्याऽष्टकवलपरिमिताहारकरण मुत्कृष्टावमोदरिकातपः १ नव कवलादारभ्य षोडशकवलपरिमिताहारकरणं मध्यमाऽवमोदरिकातपः २ सप्तदशकवलादारभ्यैकत्रिंशत्कवलपरिमिताहारकरणं जघन्यावमोदरिकातप उच्यते ३ । इत्थं त्रिविधमप्यवमोदारिकातपः प्रत्येक मेकादिकवलहीनाहारभेदेनाऽनेकविधत्वं भजतीति सूत्रेऽस्य ऽनेकविधत्वमुक्तम् । तथाऽन्यप्रकारेणाऽपि-अत्र-

---

भक्तपानद्रव्य-अवमोदरिका तप अनेक प्रकार का है, यथा आठ कवल मात्र आहार करना आदि । यहां कवल का परिमाण मुर्गी के अंडे के बराबर समझना चाहिए । प्रधान रूप से यह अवमोदरिका तप तीन प्रकार का है-उत्कृष्ट, मध्यम और जघन्य । पुरुष का परिपूर्ण आहार बत्तीस कवल-प्रमाण माना जाता है, इसमें से एक कवल से लेकर आठ कवल तक आहार करना उत्कृष्ट-अवमोदरिका तप है । नौ कवल से लेकर सोलह कवल तक आहार करना मध्यम अवमौदर्य तप है और सतरह कवल से आरंभ करके इकतीस कवल तक खाना जघन्य अवमौदर्य है ।

इस प्रकार अवमोदरिका तप यद्यपि तीन प्रकार का है तथापि एक-दो कवल कम या ज्यादा खाने से उसके अवान्तर भेद होते हैं । इसी कारण सूत्र में उसे अनेक प्रकार का कहा है ।

---

ભક્તપાનદ્રવ્ય અવમોદરિકા તપ અનેક પ્રકારના છે' યથા આઠ કોળીયા માત્ર આહાર કરવો વગેરે અહીં કોળીયાંનું પરિમાણ મરઘીના ઈંડાની બરાબર સમજવું જોઈએ. પ્રધાન રૂપથી આ અવમોદરિકા તપ ત્રણ પ્રકારના છે ઉત્કૃષ્ટ, મધ્યમ અને જઘન્ય, પુરૂષનો પરિપૂર્ણ આહાર બત્રીસ કોળીયા પ્રમાણ માનવામાં આવે છે. આમાંથી એક કોળીયાથી લઈને આઠ કોળીયા સુધી આહાર કરવો ઉત્કૃષ્ટ અવમોદરિકા તપ છે. નવ કોળીયાથી લઈને સોળ કોળીયા સુધી આહાર કરવો મધ્યમ અવમૌદર્ય તપ છે અને સત્તર કોળીયાથી આરંભ કરીને એકત્રીસ કોળીયા સુધી ખાવું જઘન્ય અવમૌદર્ય છે.

આવી રીતે અવમોદરિકા તપ જો કે ત્રણ પ્રકારના છે તો પણ એક બે કોળીયા ઓછા કે વધારે ખાવાથી તેના અનેક અવાન્તર ભેદ થાય છે અને આથી જ સૂત્રમાં તેને અનેક પ્રકારની કહેવામાં આવેલ છે,

मोदरिकातपसः पञ्चविधत्वेन शास्त्रोक्तत्वादनेकविधत्वं भवति, तथाहि-अल्पाहारावमोदरिका १ अपार्द्धावमोदरिका २ द्विभागप्राप्तावमोदरिका ३ प्राप्तावमोदरिका ४ किञ्चिदूनावमोदरिका ५ चेति। तत्राऽष्टकवलप्रमाणमात्रकवलाहारोऽल्पाहाररूपमवमोदरिका तपो भवति १ द्वादशकुक्कुटाण्डप्रमाणमात्रकवलाहारोऽपार्द्धावमोदरिकातपो भवति-२ एवम्--षोडशकुक्कुटाण्डक प्रमाणमात्रकवलाहारो द्विभागप्राप्तावमोदरिकातपो भवति-३ एवं-चतुर्विंशति कुक्कुटाण्डकप्रमाणमात्रकवलाहारः प्राप्तावमोदरिकातपो भवति-४ एकत्रिंशत्कुक्कुटाण्डकप्रमाणमात्रकवलाहारः किञ्चिदूनावमोदरिका तपो भवति-५। तत्राऽष्टौ कुक्कुटाण्डकप्रमाणमात्रान् कवलान् य आहरति तस्य पुरुषस्याऽल्पाहारनामकाऽवमोदरिका तपो भवति। द्वादश कुक्कुटाण्डकप्रमाणमात्रान् कवलान् य आहरति तस्य स आहारो-ऽपार्द्धाऽवमोदरिकातपो भवति।

---

**अन्य प्रकार से अवमोदरिका तप के शास्त्र में पांच भेद कहे गए हैं, इस कारण भी उसके अनेक भेद कहे जा सकते हैं। वे भेद इस प्रकार हैं-**

**(१) अल्पाहार अवमोदरिका (२) अपार्ध-अवमोदरिका (३) द्विभाग प्राप्त-अवमोदरिका (४) प्राप्त-अवमोदरिका और (५) किंचिदून-अवमोदरिका। आठ कवल मात्र आहार करना अल्पाहार-अवमोदरिका तप है, मुर्गी के अंडे के बराबर बारह कवल मात्र आहार करना अपार्ध-अवमोदरिका तप है, इसी प्रकार सोलह कवल मात्र आहार करना द्विभाग प्राप्त-अवमोदरिका तप है, चौबीस कवल आहार करना प्राप्त-अवमोदरिका है और इकतीस कवल मुर्गी के अंडे के बराबर आहार करना किंचिदून-अवमोदरिका तप कहलाता है।**

---

અન્ય પ્રકારથી અવમોદરિકા તપના શાસ્ત્રમાં પાંચ ભેદ કહેવામાં આવ્યા છે એ કારણને લઈને પણ તેના અનેક ભેદ કહી શકાય છે. આ ભેદ આ પ્રમાણે છે (૧) અલ્પાહાર અવમોદરિકા (૨) અપાર્ધ અવમોદરિકા (૩) દ્વિભાગપ્રાપ્ત અવમોદરિકા (૪) પ્રાપ્ત અવમોદરિકા અને (૫) કિંચિત ઉન અવમોદરિકા આઠ કોળીયા માત્ર આહાર કરવો અલ્પાહાર અવમોદરિકા તપ છે મરઘીના ઈંડાની બરાબર બાર કોળીયા માત્ર આહાર કરવો અપાર્ધ અવમોદરિકા તપ છે, એજ પ્રકારે સોળ કોળીયા આહાર કરવો દ્વિભાગ પ્રાપ્ત અવમોદરિકા તપ છે, ચોવીસ કોળીયા આહાર કરવો પ્રાપ્ત અવમોદરિકા તપ છે અને એકત્રીસ કોળીયા, મરઘીના ઈંડાની બરાબર આહાર કરવો કિંચિદૂન અવમોદરિકા તપ કહેવાય છે.

षोडशकवला अर्द्धः पुरुषाहारः तस्मात् अर्थात् अपकृष्टा-न्यूना या-ऽवमोदरिका द्वादशकवलात्मकत्वात् सा-ऽपार्द्धावमोदरिकाऽवसेया। एवं-षोडश कुक्कुटाण्डकप्रमाणमात्रान् कवलान् य आहरति तस्य स आहारो द्विभागप्राप्तावमोदरिका तपो भवति। तथा च द्वात्रिंशत्कवलात्मक पर्याप्तपुरुषाहारस्य भागद्वये कृते सति प्राप्तान् षोडशकवलान् भुञ्जानस्य पुरुषस्य द्विभागप्राप्तावमोदरिका तपो भवतीति भावः। एवं-चतुर्विंशति कुक्कुटाण्डकप्रमाणमात्रान् कवलान् य आह-

इस प्रकार जो पुरुष मुर्गी के अण्डे जितने आठ कौर आहार करता है उसके अल्पाहार नामक ऊनोदरी तप होता है। जो मुर्गी के अंडे के बराबर बारह कवल प्रमाण आहार करता है वह अपार्ध-अवमोदरिका तप वाला कहलाता है। सोलह कवल आहार पुरुष का अर्धाहार गिना जाता है, उस आधे से भी कम अर्थात् बारह कवल का आहार करना अपार्ध-अवमोदरिका तप है। जो मुर्गी के अंडे के बराबर सोलह कवल आहार करता है, उसका आहार द्विभाग प्राप्त-अवमोदरिका है। उसे द्वितीय भाग (आधा) अवमोदरिका तप भी कहते हैं। तात्पर्य यह है कि बत्तीस कवल के पुरुष के पूर्ण आहार के बराबर-बराबर के दो भाग किये जाएँ तो सोलह-सोलह हो सकते हैं। इस कारण सोलह कवल का आहार द्विभाग प्राप्त-अवमोदरिका तप समझना चाहिए। जो पुरुष मुर्गी के अण्डे के बराबर सोलह कवल का आहार करता है वह द्विभाग प्राप्त अवमोदरिका तप वाला कहलाता है।

આ પ્રમાણે જે પુરૂષ મરઘીના ઈંડા જેટલા આઠ કોળીયાનો આહાર કરે છે, તેનું અલ્પાહાર નામક ઉનોદરી તપ હોય છે' જે મરઘીના ઈંડા બરાબર બાર કોળીયા પ્રમાણ આહાર કરે છે તે અપાર્ધ અવમોદરિકા તપવાળો કહેવાય છે. સોળ કોળીયાનો આહાર પુરૂષનો અડધો આહાર ગણાય છે. તે અડધાથી ઓછો અર્થાત્ બાર કોળીયા આહાર કરવો અપાર્ધ અવમોદરિકા તપ છે. જે મરઘીના ઈંડા જેટલા સોળ કોળીયાનો આહાર કરે છે તેનો આહાર દ્વિભાગપ્રાપ્ત અવમોદરિકા તપ સમજવો તેને દ્વિતીય ભાગ (અડધો) અવમોદરિકા તપ પણ કહે છે. તાત્પર્ય એ છે કે બત્રીસ કોળીયા પુરૂષના પૂર્ણ આહારના સરખા સરખા બે ભાગ કરવામાં આવે તો સોળ સોળ થાય છે આ કારણે સોળ કોળીયાનો આહાર દ્વિ ભાગ પ્રાપ્ત અવમોદરિકા તપ સમજવો જોઈએ જે પુરૂષ મરઘીના ઇંડાની બરાબર સોળ કોળીયાનો આહાર કરે છે તે દ્વિભાગ પ્રાપ્ત અવમોદરિકા તપવાળો કહેવાય છે. એવી જ રીતે

रति तस्य स आहारः प्राप्तावमोदरिका-पादोनमात्रन्यूनतया प्राप्तेवाऽव-मोदरिका प्राप्तावमोदरिका व्यपदिश्यते। एवम्-एकत्रिंशत्कुक्कुटाण्डकप्रमाण-मात्रान् कवलान् यः पुरुष आहरति तस्य आहारः किञ्चिदूनावमोदरिका कवलैक न्यूनाऽवमोदरिका तपस्या भवति, किन्तु-द्वात्रिंशत् कवलप्रमाणमात्रान् कवलान् य आहरति तस्य पुरुषस्य स आहारः प्रमाण प्राप्ताहारत्वात् अवमोदरिका तपो न भवति। अपितु-एकेनाऽपि कवलेन ऊनमाहारमाहरन् श्रमणो निर्ग्रन्थो न प्रका-मरसभोजी भवतीति वक्तुं पार्यते। तथा च-जघन्याऽवमोदारिकारूपां तपस्यां कुर्वन् श्रमणो निर्ग्रन्थः प्रकामभोजीति न वक्तुं शक्यते, इत्येवं रीत्या भक्तपान द्रव्यावमोदरिका तपोऽनेकविधं भवतीति बोध्यम्। उक्तञ्चौपपातिके ३० सूत्रे-से किं तं भत्तपाणदव्वोमोयरिया-? भत्तपाण दव्वोमोयरिया-अणेग विहा पण्णत्ता, तं जहा-अट्ठकुक्कुडियंडगप्पमाणमेत्ते कवले आहर-माणे अवड्ढोमोयरिया-२ सोलस कुक्कुडियंडगप्पमाणमेत्ते कवले आहरमाणे दुभागपत्तोमोयरिया-३ चउवीसं कुक्कुडियंडगप्पमाण-मेत्ते कवले आहरमाणे पत्तोमोयरिया-४ एक्कत्तीसं कुक्कुडियंडग

इसी प्रकार चौबीस कवल का आहार करने वाले को प्राप्त अवमोदरिका तप होता है। जो पुरुष इकतीस कवल का आहार करता है, उसका तप किंचिदून (कुछकम) अनोदरी तप कहलाता है। किन्तु जो पुरुष बत्तीस कवल प्रमाण आहार करता है, उसका आहार प्रमाण प्राप्त (पूर्ण) होने से अवमोदरिका तप नहीं कहा जा सकता। जो श्रमण या श्रमणोपासक परिपूर्ण आहार से एक ही कवल कम खाता है उसी के विषय में ऐसा कहा जा सकता है कि वह प्रकामरस भोजी नहीं है। इस प्रकार भक्तपान द्रव्य-अवमोदरिका तप अनेक प्रकार का होता है। औपपातिक सूत्र में कहा है—

ચોવીસ કોળીયાનો આહાર કરનારને પ્રાપ્ત અવમોદરિકા તપ હોય છે જે પુરૂષ એકત્રીસ કોળીયાનો આહાર કરે છે તેનું તપ કિંચિદૂન (થોડું ઓછું) ઉનોદરી તપ કહેવાય છે, પરંતુ જે પુરૂષ બત્રીસ કોળીયા પ્રમાણ આહાર કરે છે તેનો આહાર પ્રમાણ પ્રાપ્ત (પૂર્ણ) હોવાથી અવમોદરિકા તપ કહી શકાય નહીં. જે શ્રમણ અથવા શ્રમણોપાસક પરિપૂર્ણ આહારથી એક કોળીયો પણ ઓછું ખાય છે તેના જ સંબંધમાં એમ કહી શકાય કે આ પ્રકામ રસ ભોજી નથી. આવી રીતે ભક્તપાનદ્રવ્ય અવમોદરિકા તપ અનેક પ્રકારના હોય છે. ઔપાપાતિક સૂત્રમાં કહ્યું છે

प्पमाणमेत्ते कवले आहारमाणे प्रमाणपत्ते, एत्तो एगेण वि घासेणं ऊणयं आहारमाहारे माणे समणे निग्गंथे णो पकामरसभोइ त्ति वत्तव्वं सिया, से तं भत्तपाणदव्वोमोयरिया, से तं दव्वोमोयरिया' इति अथ का सा भक्तपानद्रव्यावमोदरिका-? भक्तपानद्रव्यावमोदरिका-अनेकविधा प्रज्ञप्ता, तद्यथा-अष्ट कुक्कुटाण्डकप्रमाणमात्रान् कवलान् आहरन्-अल्पाहारः-१ द्वादशकुक्कुटाण्डकप्रमाणमात्रान् कवलान् आहरन् अपार्द्धाऽवमोदरिका-२ षोडश कुक्कुटाण्डकप्रमाणमात्रान् आहरन् द्विभागप्राप्ताऽवमोदरिका-३ चतुर्विंशति कुक्कुटाण्डकप्रमाणमात्रान् कवलान् आहरन् प्राप्ताऽवमोदरिका-४, एकत्रिंशत् कुक्कुटाण्डकप्रमाणमात्रान् कवलान् आहरन् किञ्चिदूनाऽवमोदरिका-५, द्वात्रिंशत्कुक्कुटाण्डकप्रमाणमात्रान् कवलान् आहरन् प्रमाणप्राप्तः इत एकेनापि कवलेन ऊनकम् आहार माहरन् श्रमणो निग्रन्थो 'न प्रकामरस-

---

प्रश्न---भक्तपान द्रव्य-अवमोदरिका तप कितने प्रकार का है?

उत्तर---भक्तपान द्रव्य-अवमोदरिका तप अनेक प्रकार का है, यथा मुर्गी के अंडे के बराबर आठ कवल मात्र आहार करना अल्पाहार है। मुर्गी के अंडे के बराबर बारह कवल का आहार करना अपार्ध-अवमोदरिका तप है, इसी प्रकार सोलह कवल का आहार करना द्विभागप्रास-अवमोदरिका है। चौवीस कवल का जो आहार करता है उसका तप प्रास-अवमोदरिका कहलाता है। जो इकतीस कवल आहार करता है उसे किंचिदून अवमोदरिका तप होता है। जो पूरा मुर्गी के अंडे के बराबर बत्तीस कवल आहार करता है, उसका आहार प्रमाणप्रास कहलाता है। जो श्रमण निर्ग्रन्थ प्रमाणप्रास आहार (बत्तीस) कवल से एक भी कवल कम आहार करता है, उसके विषय में यह नहीं कहा

---

પ્રશ્ન--ભક્તપાનદ્રવ્ય અવમોદરિકા તપ કેટલા પ્રકારના છે?

ઉત્તર--ભક્તપાનદ્રવ્ય અવમોદરિકા તપ અનેક પ્રકારના છે જેમ કે મરઘીના ઇંડા જેટલો આઠ કોળીયા માત્ર આહાર કરવો અલ્પાહાર છે. મરઘીના ઇંડા બરાબર બાર કોળીયા આહાર કરવો અપાર્ધ અવમોદરિકા તપ છે, એવી જ રીતે સોળ કોળીયાનો આહાર કરવો દ્વિભાગપ્રાપ્ત અવમોદરિકા છે. ચોવીસ કોળીયાનો જે આહાર કરે છે તેનુ કિંચિદૂન અવમોદરિકા તપ હોય છે. જે મરઘીનાં ઇંડા જેટલા પૂરા બત્રીસ કોળીયાનો આહાર કરે છે તેનો આહાર પ્રમાણપ્રાપ્ત કહેવાય છે. જે શ્રમણ નિર્ગ્રન્થ પ્રમાણ પ્રાપ્ત આહાર (બત્રીસ) કોળીયાથી એક પણ કોળીયો ઓછો આહાર કરે છે તેના વિષયમાં

भोजी' ति वक्तव्यं स्यात् सा-एषा भक्तपानद्रव्यावमोदरिका, सा-एषा द्रव्याव मोदरिका' इति ॥१३॥

मूलम्-भावोमोयरिया तवे अणेगविहे, अप्पकोहाइ भेयओ ॥१४॥

छाया--भावाऽवमोदरिका तपोऽनेकविधम्, अल्पक्रोधादि भेदतः ॥१४॥

तत्त्वार्थदीपिका--पूर्वं तावद्-द्रव्याऽवमोदरिका तपः प्ररूपितम्, सम्प्रति-भावाऽवमोदरिका तपः प्ररूपयितुमाह-'भावोमोयरियातवे'-इत्यादि । भावाऽवमोदरिका तपः-भावस्य क्रोधादि कषायरूपात्मपरिणामस्य प्रतनुकारकम् अवमोदरिका नाम क्रियाविशेषरूपतपो भावावमोदरिका तपः-भावस्य क्रोधादि कषायरूपात्मपरिणामस्य प्रतनुकारकम् अवमोदरिका नाम क्रियाविशेषरूपं तपो भावावमोदरिका तप उच्यते । तच्चाऽनेकविधं भवति, तद्यथा-अल्पक्रोधः अल्पमानः अल्पमाया अल्पलोभः अल्पशब्दः अल्पकलहः अल्पझञ्झश्च, इत्येव मनेक विधं भावावमोदरिकातपो भवति । तत्राऽल्पः प्रतनुः क्रोधः क्रोधमोहनीयोदय-

---

जा सकता कि वह प्रकाम रस भोजी है । यह भक्तपान द्रव्य-अवमोदरिका तप है । इस प्रकार द्रव्यावमोदरिका विवेचन पूर्ण हुआ ॥१३।

'भावोमोयरिया तवे' इत्यादि ।

सूत्रार्थ—अल्पक्रोध आदि के भेद से भाव-अवमोदरिका तप भी अनेक प्रकार का है ॥१४॥

तत्त्वार्थदीपिका—द्रव्य-अवमोदरिका तप की व्याख्या की गई, अब भाव-अवमोदरिका तप की प्ररूपणा करते हैं-

आत्मा के क्रोधादि विभाव-परिणामों को कम करना भाव-अवमोदरिका तप कहलाता है । उसके अनेक प्रकार हैं, जैसे क्रोध को कम करना, मान को कम करना, माया को कम करना, लोभ को कम करना,

---

એવું ન કહી શકાય કે તે પ્રકામરસ ભોજી છે. આ ભક્તપાનદ્રવ્ય અવમોદરિકા તપ છે. આ રીતે દ્રવ્યાવમોદરિકાનું વિવેચન પૂર્ણ થયું. ॥૧૩॥

'भावोमोयरियतवे' ઈત્યાદિ

સૂત્રાર્થ—અલ્પક્રોધ આદિના ભેદથી ભાવ અવમોદરિકા તપ અનેક પ્રકારના છે ॥ ૧૪ ॥

તત્ત્વાર્થદીપિકા-દ્રવ્ય અવમોદરિકા તપની વ્યાખ્યા કરવામાં આવી, હવે ભાવ અવમોદરિકા તપની પ્રરૂપણા કરીએ છીએ

આત્માના ક્રોધાદિ વિભાવ પરિણામોનો ઘટાડો કરવો ભાવ અવમોદરિકા તપ કહેવાય છે. તેના અનેક પ્રકાર છે. જેમકે ક્રોધ ઓછો કરવો, માન ઓછું કરવું, માયાને ઘટાડવી, લોભ ઓછો કરવો, વચનની ન્યૂનતા, કલહ

जन्योऽसहनरूपाऽक्षमा परिणति विशेषः–अल्पक्रोधः क्रोध कषायाल्पता–१ एवम् अल्पमानः जात्याद्यभिमानराहित्यम् मानाल्पता२ एवम् अल्पमाया मायाल्पता३ अल्पलोभो लोभाल्पता ४ अल्पशब्दः शब्दाल्पता, परिमितभाषणम्५ अल्पकलहः कलहाभावः ६ अल्पझञ्झः परस्परभेदोत्पादकवचनव्यापाररूप झञ्झस्याऽभावोऽवगन्तव्यः ॥७॥ ॥१४।

तत्त्वार्थनिर्युक्तिः—पूर्वं खलु=द्रव्यावमोदरिका तपः प्ररूपितम्, सम्प्रति–भावावमोदरिकातपः प्ररूपयितुमाह–'भावोमोयरिया तवे अणेगविहे, अप्प कोहाइ भेयओ'–इति। भावावमोदरिका तपः–भावस्य क्रोधादि कषायादेराभ्यन्तरस्य अक्षमादि परिणतरूपस्य प्रतनु विधायकम् अवमोदरिकानाम तपो भावाऽवमोदरिका तपः, तच्चाऽनेकविधं भवति। अल्पक्रोधादि भेदतः तद्यथा–अल्पक्रोधमानमाया लोभशब्दकलहझञ्झभेदतः। अत्राऽल्प शब्दस्य द्वन्द्वादौ

वचन की न्यूनता, कलह और झंझ की न्यूनता आदि। क्रोध मोहनीय के उदय से उत्पन्न होने वाले असहन रूप असाता परिणाम को क्रोध कहते हैं, उसकी अल्पता क्रोध की अल्पता है। जाति आदि के अभिमान की न्यूनता मानाल्पता है। माया की कमी को मायाल्पता कहते है। लोभ के पतलेपन को लोभाल्पता या अल्पलोभ कहते हैं। परिमित भाषण को शब्दाल्पता कहते हैं। कलह का अभाव अल्पकलह कहलाता है। परस्पर में भेद उत्पन्न करने वाले वचनों का प्रयोग न करना अल्पझंझ है ॥१४॥

तत्त्वार्थनिर्युक्ति—द्रव्य-अवमोदरिका तप की व्याख्या की जा चुकी, अब भाव अवमोदरिका तप का निरूपण करते हैं–

अक्षमा-परिणतिरूप क्रोध आदि वैभाविक भावों की अल्पता को भाव–अवमोदरिका तप कहते हैं। उसके अनेक भेद है-अल्पक्रोध, अल्प-

અને કજીયાની ન્યૂનતા આદિ ક્રોધ મોહનીયના ઉદયથી ઉત્પન્ન થનારા અસહનરૂપ અક્ષમાપરિણામને ક્રોધ કહે છે. તેની અલ્પતા ક્રોધની અલ્પતા છે. જાતિ વગેરેના અભિમાનની ન્યૂનતા માન અલ્પતા છે માયાનું ઓછાપણું માયાલ્પતા કહેવાય છે. લોભને પાતળો પાડવો લોભ લ્પતા અથવા અલ્પલોભ કહે છે. પરિમિત ભાષણને શબ્દાલ્પતા કહે છે કલહનો અભાવ અલ્પકલહ કહેવાય છે. પરસ્પરમાં ભેદ ઉત્પન્ન કરનાર વચનોનો પ્રયોગ ન કરવો અલ્પ ઝંઝ છે ॥૧૪॥

તત્ત્વાર્થનિર્યુક્તિ—દ્રવ્ય અવમોદરિકા તપની વ્યાખ્યા કરવામાં આવી હવે ભાવ અવમોદરિકા તપનું નિરૂપણ કરીએ છીએ

અક્ષમા પરિણતિ રૂપ ક્રોધ આદિ વૈભાવિક ભાવોની અલ્પતાને ભાવ અવમોદરિકા તપ કહે છે. તેના અનેક ભેદ છે અલ્પક્રોધ, અલ્પમાન, અલ્પમાયા,

सद्भावात् तस्य प्रत्येकमभिसम्बन्धात्, अल्पक्रोधः-१ अल्पशब्दः स्तनु वाचकः तेनाऽल्पः स्वल्पः क्रोधः क्रोधमोहनीयकर्मोदयसम्पाद्यः असहनरूपाऽक्षमा परिणतिविशेषः क्रोधाल्पत्वमित्येवम् अल्पक्रोधोनाम भावावमोदरिका तपः १ एवम्-अल्पमानः जात्याद्यभिमानराहित्यम् मानाल्पता २ अल्पमाया-मायाल्पत्वम्-३ अल्पलोभः लोभाल्पता ४ अल्पशब्दः-परिमितभाषणम्, शब्दाल्पता-५ अल्पकलहः-कलहाभावः-६ अल्पझञ्झः-परस्पर भेदोत्पादकवचनव्यापाररूपझञ्झस्याऽभावः-७ इत्येवं रीत्या भावावमोदरिका तपोऽनेकविधं भवति। उक्तञ्चौपपातिके ३० सूत्रे-'से किं तं भावोमोयरिया ? भावोमोयरिया अणेगविहा पण्णत्ता, तं जहा अप्पकोहे१ अप्पमाणे २ अप्पमाए३ अप्प-

---

मान अल्पमाया, अल्पलोभ, अल्पशब्द, अल्पकलह, अल्पझंझ आदि। 'अल्प' शब्द मन्दता या न्यूनता का वाचक है। अतः अल्पक्रोध का अर्थ है-क्रोध मोहनीय कर्म के उदय से उत्पन्न होने वाले असहनरूप अक्षमा परिणति की न्यूनता या मन्दता यह मन्दता अल्पक्रोध नामक भाव-अवमोदरिका तप है। इसी प्रकार जाति आदि के अभिमान की अल्पता को अल्पमान तप समझना चाहिए। माया की अल्पता अल्पमाया कहलाति है। लोभ की अल्पता अल्पलोभ है। परिमित भाषण को अल्पशब्द कहते हैं। कलह का अभाव अल्पकलह है। परस्पर में भेद उत्पन्न करने वाले का प्रयोग झंझ कहलाता है और उसका अभाव अल्पझंझ। इस प्रकार भावअवमोदरिका तप अनेक प्रकार का है। औपपातिक सूत्र में कहा है-भाव अवमोदरिका तप कितने प्रकार का है ?

---

અલ્પલોભ અલ્પશબ્દ, અલ્પકલહ, અલ્પ ઝંઝ—આદિ 'અલ્પ' શબ્દ મન્દતા અથવા ન્યૂનતાનું વાચક છે આથી અલ્પક્રોધનો અર્થ છે ક્રોધ મોહનીય કર્મના ઉદયથી ઉત્પન્ન થનારા અસહનરૂપ અક્ષમાપરિણતિની ન્યૂનતા અથવા મન્દતા અલ્પ ક્રોધ નામક ભાવ અવમોદરિકા તપ છે એવી જ રીતે જાતિ આદિના અભિમાનની અલ્પતાને અલ્પમાન તપ સમજવું જોઈએ માયાની અલ્પતા અલ્પમાયા કહેવાય છે. લોભની અલ્પતા અલ્પલોભ છે. પરિમિત ભાષણને અલ્પશબ્દ કહે છે.

કલહનો અભાવ અલ્પકલહ છે. પરસ્પરમાં ભેદ ઉત્પન્ન કરનાર વચનોના પ્રયોગને ઝંઝ કહેવાય છે અને તેનો અભાવ અલ્પઝંઝ છે—આ રીતે ભાવ અવમોદરિકા તપ અનેક પ્રકારના છે.

लोहे४ अप्पसद्दे५ अप्पझंझे७ से त्तं भावोमोयरिया से त्तं ओमोयरिया' इति। अथ का सा भावावमोदरिका ? भावाऽवमोदरिकाऽनेकविधा प्रज्ञप्ता, तद्यथा -अल्पक्रोधः१ अल्पमानः२ अल्पमाया ३ अल्पलोभः ४ अल्पशब्दः५ अल्पकलहः६ अल्पझञ्झः७ सा-एषा भावाऽवमोदरिका, सा एषा अवमोदरिका इति ॥१४॥

मूलम्-भिक्खायरिया तवे अणेगविहे, दव्वाभिग्गहचराइ भेयओ ॥१५॥

छाया-भिक्षाचर्या तपोऽनेकविधम्, द्रव्याभिग्रहचरादि भेदतः ॥१५॥

तत्त्वार्थदीपिका—पूर्वं खलु-'अवमोदरिका' नाम द्वितीयं बाह्यं तपः सविस्तरं प्ररूपितम् सम्प्रति-तृतीयं भिक्षाचर्या तपः प्ररूपयितुमाह- 'भिक्खायरिया तवे अणेगविहे, दव्वाभिग्गहचराइ भेयओ' इति। भिक्षाचर्या तपः-'अमुकस्थाने अमुककाले अमुकवस्तु ग्रहीष्यामि' इत्येवं रीत्याऽभि-

---

उत्तर—भाव अवमोदरिका तप अनेक प्रकार का है-अल्पक्रोध, अल्प-मान, अल्पमाया, अल्पलोभ, अल्पशब्द, अल्पझंझ आदि। यह भाव-अवमोदरिका तप है ॥१४॥

'भिक्खायरिया तवे अणेगविहे' इत्यादि,

सूत्रार्थ—द्रव्याभिग्रहचर आदि के भेद से भिक्षाचर्या तप भी अनेक प्रकार का है ॥१५॥

तत्त्वार्थदीपिका—इससे पहले अवमोदरिका नामक बाह्य तप का विस्तार पूर्वक प्ररूपण किया गया, अब भिक्षाचर्या नामक तीसरे तप की प्ररूपणा करते हैं-

द्रव्याभिग्रहचर आदि के भेद से भिक्षाचर्या तप के अनेक भेद

---

ઔપપાતિકસૂત્રના ત્રીસમાં સૂત્રમાં કહ્યું છે ભાવ અવમોદરિકા તપ કેટલા પ્રકારના છે ? ઉત્તર-ભાવ અવમોદરિકા અનેક પ્રકારની છે. અલ્પક્રોધ અલ્પમાન, અલ્પમાયા, અલ્પલોભ, અલ્પશબ્દ. અલ્પકલહ, અપઝંઝ— આદિ આ ભાવ અવમોદરિકા તપ છે. ॥ ૧૪ ॥

'भिक्खायरिया तवे' ઈત્યાદિ

સૂત્રાર્થ--દ્રવ્યાભિગ્રહ ચર આદિના ભેદથી ભિક્ષાચર્યા તપ અનેક પ્રકારના છે ॥ ૧૫ ॥

તત્ત્વાર્થદીપિકા--આની પહેલા અવમોદરિકા નામક દ્વિતીય બાહ્યતપનું વિસ્તારપૂર્વક પ્રરૂપણ કરવામાં આવ્યું, હવે ભિક્ષાચર્યા નામક ત્રીજા તપની પ્રરૂપણા કરીએ છીએ-

દ્રવ્યાભિગ્રહચર આદિના ભેદથી ભિક્ષાચર્યા તપના અનેક ભેદ છે,

ग्रहपूर्वकं भिक्षाटनविषयकं तपो भिक्षाचर्या तप उच्यते । तच्चाऽनेकविधं भवति तद्यथा–द्रव्याभिग्रहचरः–अमुकमेवाऽशन पानं ग्रहीष्यामि' इत्येवं द्रव्याभिग्रहेण चरतीति द्रव्याभिग्रहचर, उच्यते१ आदिना क्षेत्राभिग्रहचरः 'अमुकस्थाने ग्रहीष्यामि' इत्येवं क्षेत्राभिग्रहेण चरतीति क्षेत्राभिग्रहचरः २ कालाभिग्रहचरः 'अमुककाले पूर्वाह्णादावेव ग्रहीष्यामि-न तु पराह्णे नापि रात्रौ' इत्येवं काल विशेषाभिग्रहेण चरतीति कालाभिग्रहचरः ३ एवम्–भावाभिग्रहचरः ४ उत्क्षिप्तचरः ५ निक्षिप्तचरः ६ उत्क्षिप्तनिक्षिप्तचरः७ निक्षिप्तोत्क्षिप्तचरः८ वर्त्यमानचरः९

---

है। 'अमुकस्थान में' अमुक काल में, अमुक वस्तु ग्रहण करूंगा' इस तरह अभिग्रह करके भिक्षाटन करना भिक्षाचर्यातप कहलाता है। उसके अनेक भेद हैं। वे इस प्रकार हैं–

(१) द्रव्याभिग्रहचर–अमुक अशन–पान ही ग्रहण करूंगा, इस प्रकार द्रव्य संबंधी अभिग्रह करके भिक्षाटन करने वाला।

(२) क्षेत्राभिग्रहचर–'अमुक स्थान पर ही ग्रहण करूंगा, इस तरह क्षेत्र संबन्धी अभिग्रह करके भिक्षाटन करने वाला।

(३) कालाभिग्रहचर–अमुक काल में–जैसे पूर्वाह्ण में, ही ग्रहण करूंगा, न अपराह्ण में, न मध्याह्न में, ऐसा अभिग्रह करके भिक्षा टन करने वाला।

इसी प्रकार (४) भावाभिग्रहचर (५) उत्क्षिप्तचर (३) निक्षिप्तचर (७) उत्क्षिप्तनिक्षिप्तचर (८) निक्षिप्तउत्क्षिप्तचर (९) वर्त्यमानचर (१०) संहृ-

---

અમુક સ્થાને. અમુક કાળમાં, અમુક વસ્તુ ગ્રહણ કરીશ આ રીતે અભિગ્રહ કરીને ભિક્ષાટન કરવું ભિક્ષાચર્યા તપ કહેવાય છે. તેના અનેક ભેદ છે–તે આ પ્રકારે છે

(૧) દ્રવ્યાભિગ્રહચર–અમુક અશન પાન જ ગ્રહણ કરીશ એ રીતે દ્રવ્ય સંબંધી અભિગ્રહ કરીને ભિક્ષાટન કરનાર

(૨) ક્ષેત્રાભિગ્રહચર–અમુક સ્થળે જ ગ્રહણ કરીશ, આ પ્રમાણે ક્ષેત્ર-સંબંધી અભિગ્રહ કરીને ભિક્ષાટન કરનાર.

(૩) કાલાભિગ્રહચર––અમુકકાળમાં જેમકે પૂર્વાહ્નમાં જ ગ્રહણ કરીશ અપરાહ્નમાં કે મધ્યાહ્નમાં નહીં એવો અભિગ્રહ ધારીને ભિક્ષાટન કરનાર

એવી જ રીતે (૪) ભાવાભિગ્રહચર (૫) ઉત્ક્ષિપ્તચર (૬) નિક્ષિપ્તચર (૭) ઉત્ક્ષિપ્તનિક્ષિપ્તચર (૮) નિક્ષિપ્તઉત્ક્ષિપ્તચર (૯) વર્ત્યમાનચર (૧૦) સંહિ-

संह्रियमाणचरः१० उपनीतचरः११ अपनीतचरः१२ उपनीतापनीतचरः=१३ अपनीतोपनीतचरः१४ संसृष्टचरः१५ असंसृष्टचरः१६ तज्जातसंसृष्टचरः१७ अज्ञातचरः१८ मौनचरः १९ दृष्टलाभिकः२० अदृष्टलाभिकः २१ पृष्टलाभिकः२२ अपृष्टलाभिकः२३ भिक्षालाभिकः२४ अभिक्षालाभिकः २५ अन्नग्लायकः२६ औपनिहितकः २७ परिमितपिण्डपातिकः २८ शुद्धैषणिकः २९ संख्यादत्तिकः इत्येवं रीत्याऽनेकविधं तावद् भिक्षाचर्यातपो भवतीति बोध्यम्। तत्र भावाभिग्रहचरस्तु–'अमुक प्रकारको दाता यदि दास्यति-तदा ग्रहीष्यामि' इत्येवंभावाभिग्रहेण चरतीति भावाभिग्रहचरोऽवगन्तव्यः४ एवम् उत्क्षिप्त चरादिकमपि स्वयं ज्ञेयम्।१५।

तत्त्वार्थनिर्युक्ति—पूर्वं तावद् द्वितीयं बाह्यरूपम् अवमोदरिका तपः

---

यमाणचर (११) उपनीतचर (१२) अपनीतचर (१३) उपनीतापनीतचर (१५) संसृष्टचर (१६) असंसृष्टचर (१७) तज्जातसंसृष्टचर (१८) अज्ञातचर (१९) मौनचर (२०) दृष्टलाभिक (२२) अदृष्टलाभिक (२३) पृष्टलाभिक (२३) अपृष्टलाभिक (२४) भिक्षालाभिक (२५) अभिक्षालाभिक (२६) अन्नग्लायक (२७) औपनिहतक (२८) परिमितपिण्डपातिक (२९) शुद्धैषणिक (३०) संख्यादत्तिक, इस प्रकार भिक्षाचर्या तप करने वाले अनेक प्रकार के हैं और इसी कारण इस तप के भी अनेक भेद होते हैं।

'अमुक प्रकार का दाता यदि देगा तो ग्रहण करूंगा इस प्रकार भाव संबन्धी अभिग्रह करके भिक्षाटन करने वाला भावाभिग्रहचर समझना चाहिए। इसी प्रकार उत्क्षिप्तचर आदि का अर्थ भी स्वयं ही समझ लेना चाहिए ॥१५॥

तत्त्वार्थनिर्युक्तिः—पहले अवमोदरिका नामक द्वितीय बाह्य तप का

---

યમાણુચર (૧૧) ઉપનીતચર (૧૨) અપનીતચર (૧૩) ઉપનીતાપનીતચર (૧૪) અપનીતોપનીતચર (૧૫) સંસૃષ્ટચર (૧૬) અસંસૃષ્ટચર (૧૭) તજ્જાતસંસૃષ્ટચર (૧૮) આજ્ઞ તચર (૧૯) મૌનચર (૨૦) દ્રષ્ટિલાભિક (૨૧) અદ્રષ્ટિલાભિક (૨૨) પૃષ્ટલાભિક (૨૩) અપૃષ્ટલાભિક (૨૪) ભિક્ષાલાભિક (૨૫) અભિક્ષાલાભિક (૨૬) અન્નગ્લાયક (૨૭) ઔપનિહિતક (૨૮) પરિમિતપિણ્ડપાતિક (૨૯) શુદ્ધૈષણિક (૩૦) સંખ્યાદત્તિક, આ રીતે ભિક્ષાચર્યા તપ કરનારાઓ અનેક પ્રકારના છે અને આ કારણે જ આ તપના પણ અનેક ભેદ હોય છે.

અમુક પ્રકારનો દાતા જો આપશે તો જ ગ્રહણ કરીશ આ રીતે ભાવ સંબંધી અભિગ્રહ કરીને ભિક્ષાટન કરનાર ભાવાભિગ્રહચર સમજવો જોઈએ એવી જ રીતે ઉત્ક્ષિપ્તચર વગેરેનો અર્થ પણ સ્વયં સમજી લેવો ॥ ૧૫ ॥

તત્ત્વાર્થનિર્યુક્તિ—પહેલાં અવમોદરિકા નામક દ્વિતીય બાહ્ય તપનું

सविस्तरं प्ररूपितम्, सम्प्रति–क्रमप्राप्तस्य तृतीयस्य भिक्षाचर्या नामक तपसः स्वरूपं सभेदं प्ररूपयितुमाह='भिक्खायरिया तवे अणेगविहे, दव्वाभिग्गह चराइ भेदओ' इति भिक्षाचर्या तपः वृत्तिपरिसंख्यानरूपम् 'अमुकस्थाने अमुककाले अमुक वस्तु ग्रहीष्यामि' इत्यादिरीत्याऽभिग्रहपूर्वकं भिक्षाटन-रूपं तपश्चरणम् अनेकविधं भवति। तद्यथा–द्रव्याभिग्रहचरादि भेदतः, द्रव्याभि-ग्रहचरः १ आदिना क्षेत्राभिग्रहचरः २ कालाभिग्रहचरः ३ भावाभिग्रहचरः ४ उत्क्षिप्तचरः ५ निक्षिप्तचरः ६ उत्क्षिप्तनिक्षिप्तचरः ७ निक्षिप्तोत्क्षिप्तचरः ८ वर्त्यमानचरः ९ संह्रियमानचरः १० उपनीचरः ११ अपनीतचरः १२ उपनीतापनीत-चरः १४ संसृष्टचरः १५ असंसृष्टचरः १६ तज्जातसंसृष्टचरः १७ अज्ञातचरः १८ मौनचरः १९ दृष्टलाभिकः २० अदृष्टलाभिकः २१ पृष्टलाभिकः २२ अपृष्ट-

---

सविस्तर प्ररूपण किया गया अब क्रमप्राप्त तीसरे भिक्षाचर्या नामक तप का भेदों सहित स्वरूप प्रदर्शित करते हैं—

भिक्षाचर्या तप का दूसरा नाम वृत्तिपरिसंख्यान है। 'अमुक स्थान में' अमुक वस्तु ही ग्रहण करूंगा 'इत्यादि रूप से अभिग्रह करके भिक्षा-टन करना भिक्षाचर्या तप कहलाता है। यह तप द्रव्याभिग्रहचर आदि के भेद से अनेक प्रकार का है, यथा· (१) द्रव्याभिग्रहचर (२) क्षेत्राभि-ग्रहचर (३) कालाभिग्रहचर (४) भावाभिग्रहचर (५) उत्क्षिप्तचर (६) निक्षिप्तचर (७) उत्क्षिप्तनिक्षिप्तचर (८) निक्षिप्तउत्क्षिप्तचर (९) वर्त्यमानचर (१०) संह्रियमाणचार (११) उपनीतचर (१२) अपनी-तचर (१३) उपनीतापनीतचर (१४) अपनीतोपनीतचर (१५) संसृष्टचर (१६) असंसृष्टचर (१७) तज्जातसंसृष्टचर (१८) अज्ञातचर (१९) मौनचर (२०) दृष्टलाभिक (२१) अदृष्टलाभिक (२२) पृष्टलाभिक

---

સવિસ્તર પ્રરૂપણ કરવામાં આવ્યું હવે ક્રમપ્રાપ્ત ત્રીજા ભિક્ષાચર્યા નામક તપનું ભેદો સહિત સ્વરૂપ પ્રદર્શિત કરીએ છીએ

ભિક્ષાચર્યા તપનું બીજુ નામ વૃત્તિપરિસંખ્યાત છે. અમુક સ્થાનમાં અમુક કાળમાં, અમુક વસ્તુ જ ગ્રહણ કરીશ ઇત્યાદિ રૂપથી અભિગ્રહ કરીને ભિક્ષાટન કરવું ભિક્ષાચર્યા તપ કહેવાય છે. આ તપ દ્રવ્યાભિગ્રહચર આદિના ભેદથી અનેક પ્રકારના છે જેમકે—(૧) દ્રવ્યાભિગ્રહચર (૨) ક્ષેત્રાભિગ્રહચર (૩) કાલાભિગ્રહચર (૪) ભાવાભિગ્રહચર (૫) ઉત્ક્ષિપ્તચર (૬) નિક્ષિપ્તચર (૭) ઉત્ક્ષિપ્તનિક્ષિપ્તચર (૮) નિક્ષિપ્ત ઉત્ક્ષિપ્તચર (૯) વર્ત્યમાનચર (૧૦) (૧૬) અસંસૃષ્ટચર (૧૭) તજ્જાતસંસૃષ્ટચર (૧૮) અજ્ઞાતચર (૧૯) મૌનચર (૨૦) દ્રષ્ટલાભિક (૨૧)અદ્રષ્ટલાભિક (૨૨) પૃષ્ટલાભિક (૨૩) અપૃષ્ટલાભિક

लाभिकः २३ भिक्षालाभिकः २४ अभिक्षालाभिकः २५ अन्नग्लायकः २६ औपनिहितकः २७ परिमितपिण्डपातिकः २८ शुद्धैषणिकः २९ संख्यादत्तिकः ३० इत्येवं रीत्याऽनेकविधं भिक्षाचर्या तपो भवति। तत्राश्रिताऽभिग्रहं वा य श्चरति-आसेवते, स द्रव्याभिग्रहचर उच्यते, भिक्षाचर्यायाः प्रस्तावेऽपि-धर्मधर्मिणोर भेदविवक्षया द्रव्याभिग्रहचर इत्युक्तम्। द्रव्याभिग्रहश्च लेपकृतादि द्रव्यविषयोऽवगन्तव्यः भक्तपानादि द्रव्यविषयकोऽभिग्रहो द्रव्याभिग्रहो बोध्यः१ 'अमुकस्थाने ग्रहीष्यामि' इत्येवं रीत्या क्षेत्रविशेषमभिगृह्य यश्चरति-भिक्षामटति स क्षेत्राभिग्रहचर उच्यते, क्षेत्रविषयकोऽभिग्रहः क्षेत्राभिग्रहः २ 'पूर्वाह्णे ग्रहीष्यामि-

(२३) अपृष्टलाभिक (२४) भिक्षालाभिक (२५) अभिक्षालाभिक (२६) अन्नग्लायक (२७) औपनिहितक (२८) परिमितपिण्डपातिक (२९) शुद्धैषणिक (३०) संख्यादत्तिक, इस प्रकार भिक्षाचर्या तप अनेक प्रकार का है। इनका स्वरूप इस प्रकार है—

(१) द्रव्याभिग्रहचर-द्रव्य संबंधी अभिग्रह करके जो भिक्षाटन करता है, वह द्रव्याभिग्रहचर कहलाता है। भिक्षा का प्रकरण होने पर भी धर्म और धर्मी के अभेद की विवक्षा करके द्रव्याभिग्रहचर ऐसा कहा गया है। द्रव्याभिग्रह यहां लेपकृत आदि द्रव्यसंबंधी समझना चाहिए। भोजन-पानी आदि द्रव्यों से संबंध रखने वाला अभिग्रह द्रव्याभिग्रह कहलाता है।

(२) क्षेत्राभिग्रहचर-'अमुक स्थानपरग्रहण करूंगा इस प्रकार क्षेत्र संबंधी अभिग्रह करके जो भिक्षार्थ भ्रमण करता है वह क्षेत्राभिग्रहचर कहलाता है। क्षेत्र संबंधी अभिग्रह क्षेत्राभिग्रह है।

(૨૪) ભિક્ષાલાભિક (૨૫) અભિક્ષાલાભિક (૨૬) અન્નગ્લાયક (૨૭) ઔપનિહિતક (૨૮) પરિમિતપિણ્ડપાતિક (૨૯) શુદ્ધૈષણિક (૩૦) સંખ્યાદત્તિક આ રીતે ભિક્ષાચર્યા તપ અનેક પ્રકારના છે. એમનું સ્વરૂપ આ પ્રમાણે છે (૧) દ્રવ્યાભિગ્રહચર-દ્રવ્યસંબંધી અભિગ્રહ ધારીને જે ભિક્ષાટન કરે છે, તે દ્રવ્યાભિગ્રહચર કહેવાય છે ભિક્ષાનું પ્રકરણ હોવા છતાં પણ ધર્મ અને ધર્મના અભેદની વિવક્ષા કરીને 'દ્રવ્યાભિગ્રહચર' એમ કહેવામાં આવ્યું છે. દ્રવ્યાભિગ્રહ અહીં લેપકૃત આદિ દ્રવ્યસંબંધી સમજવો જોઈએ ભોજન પાણી આદિ દ્રવ્યોથી સંબધ રાખનાર અભિગ્રહ દ્રવ્યાભિગ્રહ કહેવાય છે.

(૨) ક્ષેત્રાભિગ્રહચર—'અમુક સ્થાન પર ગ્રહણ કરીશ' આ રીતે ક્ષેત્ર સંબંધી અભિગ્રહ કરીને જે ભિક્ષા કાજે ભ્રમણ કરે છે તે ક્ષેત્રાભિગ્રહચર કહેવાય છે. ક્ષેત્ર સંબંધી અભિગ્રહ ક્ષેત્રાભિગ્રહ છે.

नापराह्णे-न रात्रौ वा' इत्येवं कालविशेषमभिगृह्य चरति-भिक्षामटति यः स कालाभिग्रहचर उच्यते, कालविशेषकोऽभिग्रहः कालाभिग्रहः ३ 'अमुक प्रकारको दाता शुद्धभावेन दास्यति-तदा ग्रहीष्यामि' इत्येवं दातृविशेषमभिगृह्य चरतीति भावाभिग्रहचरः । यद्वा-गान हासनादि प्रवृत्तपुरुषादि विषयकोऽभिग्रहो भावाभिग्रहोऽवसेयः ४ उत्क्षिप्तं गृहस्थेन स्वार्थं पाकभाजनादुद्धृतमभिगृह्य चरति 'स्वार्थं पाकपात्रात् उद्धृतं भोजनादिकं यदि दास्यति तदा ग्रहीष्यामि' इत्येवम्-उत्क्षिप्ताभिग्रहचर उच्यते, उत्क्षिप्तविषयकोऽभिग्रहः उत्क्षिप्ताभिग्रहः ५

(३) कालाभिग्रहचर-पूर्वाह्ण में ही ग्रहण करूंगा, अपराह्ण या मध्याह्न में नहीं, ऐसा अभिग्रह करने वाला कालाभिग्रहचर कहलाता है । कालविषयक अभिग्रह कालाभिग्रह है ।

(४) भावाभिग्रहचर-'अमुक प्रकार का दाता शुद्धभाव से देगा तो ग्रहण करूंगा इस तरह दाता संबंधी अभिग्रह करके भिक्षाटन करने वाला भावाभिग्रहचर कहलाता है अथवा गाने या हसने में प्रवृत्त पुरुष आदि के हाथ से ही आहार लूंगा, ऐसा अभिग्रह करना भावाभिग्रह समझना चाहिए ।

(५) उत्क्षिप्तचर—गृहस्थ ने अपने लिए पात्र में से निकाला हो वह उद्धृत कहलाता है । 'जो भोजनादिक अपने खुद के लिए हंडिया में से बाहर निकाला हो वही ग्रहण करूंगा ऐसा नियम ग्रहण करने वाला उत्क्षिप्तचर कहलाता है । उत्क्षिप्त (बाहर निकाले) आहार का नियम स्वीकार करना उत्क्षिप्ताभिग्रह समझना चाहिए ।

(૩) કાલાભિગ્રહચર-પૂર્વાહ્નમાં જ ગ્રહણ કરીશ, અપરાહ્ન અથવા મધ્યાહ્નમા નહીં એવો અભિગ્રહ રાખનાર કાલાભિગ્રહચર કહેવાય છે. કાલ વિષયક અભિગ્રહ કાલાભિગ્રહ છે.

(૪) ભાવાભિગ્રહચર-અમુક પ્રકારનો દાતા શુદ્ધ ભાવથી આપશે તો જ ગ્રહણ કરીશ એ રીતે દાતા સંબંધી અભિગ્રહ રાખીને ભિક્ષાટન કરનાર ભાવાભિગ્રહચર કહેવાય છે, અથવા ગાવા અગર હસવામાં પ્રવૃત્ત પુરૂષ આદિના હાથે જ આહાર લઈશ એવો અભિગ્રહ કરવો ભાવાભિગ્રહ સમજવો.

(૫) ઉત્ક્ષિપ્તચર-ગૃહસ્થે પોતાને માટે પાત્રમાંથી કાઢયું હોય તે ઉદ્ધૃત કહેવાય છે. જે ભોજનાદિક પોતાના જ માટે વાસણમાંથી બહાર કાઢયું હોય તે જ ગ્રહણ કરીશ એવો નિયમ ગ્રહણ કરનાર ઉત્ક્ષિપ્તચર કહેવાય છે. (બહાર કાઢેલ) આહારનો નિયમ સ્વીકાર કરવો ઉત્ક્ષિપ્ત અભિગ્રહ સમજવો જોઈએ.

